THE CALCUTTA SANSKRIT SERIES

*General Editor :*

NARENDRACHANDRA VEDANTATIRTHA, M. A.

**No. XIX** **Vol. II**

# श्रीतत्त्वचिन्तामणिः

PARAMAHAMSA PŪRṆĀNANDA'S

# ŚRĪTATTVACINTĀMAṆI

(CHAPTERS XX—XXVI)

*Critically edited by*

CHINTAMANI BHATTACHARYA

METROPOLITAN PRINTING AND
PUBLISHING HOUSE, LIMITED

CALCUTTA, 1937

# कलिकाता-संस्कृत-ग्रन्थमाला

१। ब्रह्मसूत्रशाङ्करभाष्यम्—भामती-पञ्चपादिका-पञ्चपादिकाविवरण-तत्त्वदीपन-पञ्चपादिकाविवरणटीका-ऋजुविवरण--भामतीटीकाऋजुप्रकाशिका--चित्सुखकृतभाष्यभावप्रकाशिका-नारायणसरस्वतीकृतवार्त्तिक-नवीनटिप्पनी-प्रदीप-व्याख्योपव्याख्यानवकोपेतम्। संस्कृतभूमिका-सूचीपत्रादिसमेतम्। कलिकाताविश्वविद्यालयाध्यापक-महामहोपाध्याय-श्रीअनन्तकृष्णशास्त्रिणा संस्कृतम्। गोवर्द्धनमठाधीश-श्रीश्रीशङ्कराचार्य-लिखिताङ्गलभूमिकया समलङ्कृतम्। चतुःसूची-पर्यन्तम्। मूल्यम्—१५) रौप्यकपञ्चदशकम्।

२। वाल्मीकि-रामायणम्—लोकनाथचक्रवर्त्तिकृत-टीका—टिप्पनी--वङ्गानुवादसमेतम्। कलिकाता-विश्वविद्यालयाध्यापक-श्रीअमरेश्वरठाकुर-एम्-ए-पि-एच्-डि-वेदान्तशास्त्रिणा संस्कृतम्, ऊनत्रिंश-खण्डान्तम्।

ततः, अक्षपादगोतम-न्यायदर्शनेतिहासादिग्रन्थकृत्-'मेट्रोपलिटान् प्रिण्टिं एण्ड पाव्लिशिं हाउस् लिमिटेड्'-कलिकातासंस्कृतग्रन्थमालाध्यक्ष-श्रीनरेन्द्रचन्द्र-वेदान्ततीर्थ-एम्-ए-संस्क्रियमाणम्। प्रतिमासं खण्डशः प्रकाश्यमानम्।

अस्य ३७खण्डानि प्रकाशितानि। वङ्गाक्षरैर्मुद्रितानि। प्रतिखण्डं मूल्यम्—१) रौप्यकमात्रम्।

३। कौलज्ञाननिर्णयः—बौद्धतन्त्रम्। मत्स्येन्द्रनाथप्रस्थानभूत-कौलज्ञाननिर्णय-ज्ञानकारिका-अकुल-वीरतन्त्राद्यात्मकः। आङ्गलभूमिका-सूचीपत्रादिभिः समलङ्कृतः। कलिकाताविश्वविद्यालयाध्यापक-श्रीप्रबोधचन्द्र-वागचि-एम्-ए-डि-लिट्-संस्कृतः। मूल्यम्—६) रौप्यकषट्कम्।

४। वेदान्तसिद्धान्तसूक्तिमञ्जरी—सिद्धान्तलेशसिद्धान्तात्मिका। गङ्गाधरेन्द्रसरस्वती-कृता। प्रकाश-टीकासमेता। संस्कृतभूमिकाङ्गलभूमिका-संस्कृतटिप्पन्याङ्गलटिप्पनी-सूचीपत्रादिभिः समलङ्कृता। अध्यापक-श्रीनरेन्द्रचन्द्र-वेदान्ततीर्थ-एम्-ए-संस्कृता। मूल्यम्—४) रौप्यकचतुष्टयम्।

५। अभिनयदर्पणम्—आङ्गिकाभिनयोपयोगिशरीरसंस्थानोपदेशको नाट्यशास्त्रविशेषः। नन्दिकेश्वर-कृतम्। आङ्गलभूमिकानुवाद-टिप्पनी-सूचीपत्रादिभिः समलङ्कृतम्। कलिकाताविश्वविद्यालयाध्यापक-श्रीमनोमोहन-घोष-एम्-ए-काव्यतीर्थ-संस्कृतम्। मूल्यम्—५) रौप्यकपञ्चकम्।

६। काव्यप्रकाशः—अलङ्कारशास्त्रम्। मम्मटभट्ट-कृतः। महेश्वरन्यायालङ्कारभट्टाचार्य-कृतादर्शटीका-संस्कृतभूमिका-टिप्पनी-सूचीपत्रादिसमेतः। रवीन्द्रनाथ-गीताञ्जल्यनुवादात्मक-संस्कृतगीताञ्जलि-कृष्णद्वीप-'पाका-टोल'--विद्यालयाध्यक्षचर--श्रीअमरेन्द्रमोहन-तर्कतीर्थ--संस्कृतसाहित्यपरिषत्पत्रिका—सहकारिसम्पादक-श्रीउपेन्द्रमोहन-सांख्यतीर्थ-संस्कृतः। ढाकाविश्वविद्यालयाध्यापक-श्रीसुशीलकुमार दे एम्-ए-डि-लिट्-लिखिताङ्गलभूमिकया, अध्यापक-श्रीअमरेश्वर-ठाकुर एम्-ए-पि-एच्-डि-वेदान्तशास्त्रि-लिखिताङ्गलसंक्षिप्तसारेण च समलङ्कृतः। मूल्यम्—८) रौप्यकाष्टकम्।

७। मातृकाभेदतन्त्रम्—संस्कृतभूमिका-टिप्पनी-सूचीपत्रादिसमेतम्। अध्यापक-श्रीचिन्तामणिभट्टाचार्य-संस्कृतम्। अध्यापक-श्रीनरेन्द्रचन्द्र वेदान्ततीर्थ एम्-ए-लिखिताङ्गलभूमिकया समलङ्कृतम्। मूल्यम्—२) रौप्यकद्वयम्।

८। सप्तपदार्थी—वैशेषिकतन्त्रसिद्धपदार्थविवेचनरूपा। शिवादित्यकृता। मितभाषिणी-पदार्थचन्द्रिका-बलभद्रसन्दर्भ-जिनवर्धनकृतटीका-टिप्पन्यादिसमेता। संस्कृतभूमिकाङ्गलभूमिका-सूचीपत्रादिभिः समलङ्कृता। अध्यापक-श्रीनरेन्द्रचन्द्रवेदान्ततीर्थ-एम्-ए-अध्यापक-श्रीअमरेन्द्रमोहन-तर्कतीर्थ-संस्कृता। मूल्यम्—४) रौप्यकचतुष्टयम्।

९। न्यायामृताद्वैतसिद्धी—न्यायामृततरङ्गिणी--न्यायामृतकण्टकोद्धार--सिद्धिव्याख्या--गौडब्रह्मानन्दी--(लघुचन्द्रिका)-न्यायामृतसौगन्ध्य-विट्ठलेशोपाध्यायी-सौगन्ध्यविमर्श-नामकव्याख्योपव्याख्यासप्तकोपेते। संस्कृत-भूमिकाङ्गलभूमिका-टिप्पनी-सूचीपत्रादिभिः समलङ्कृते। महामहोपाध्याय-श्रीअनन्तकृष्णशास्त्रि-संस्कृते। साक्षिबाधविचार-पर्यन्तं प्रथमखण्डम्। मूल्यम्—१२) रौप्यकद्वादशकम्।

१०। डाकार्णवः—बौद्धतन्त्रम्। आङ्गलभूमिका-टिप्पनी-सूचीपत्रादिभिः समलङ्कृतः। आशुतोष कालेजाध्यापक-श्रीनगेन्द्रनारायणचतुर्धुरीण-एम्-ए-पि-एच्-डि-संस्कृतः। मूल्यम्—५) रौप्यकपञ्चकम्

११। अध्यात्मरामायणम्—नरोत्तम-गोपालचक्रवर्ति-रामवर्म-कृतटीका-टिप्पनी-सूचीपत्रादिसमेतम्। अध्यापक-श्रीनगेन्द्रनाथसिद्धान्तरत्न-संस्कृतम्। अध्यापक-श्रीप्रबोधचन्द्र-वागचि-एम्-ए-डि-लिट्-लिखिताङ्गलभूमि-कया समलङ्कृतम्। मूल्यम्—१२) रौप्यकद्वादशकम्

१२। देवतामूर्तिप्रकरणम्—मूर्तिनिर्माणोपदेशकः शिल्पशास्त्रविशेषः। सूत्रधारमण्डन-कृतम्। संस्कृत-टीका-पाठभेद-सूचीपत्रादिसमेतं ग्रन्थकृत्कृत-रूपमण्डन-तत्सूचीसहितञ्च। अध्यापक-श्रीउपेन्द्रमोहनसांख्यतीर्थ-संस्कृतम्। शान्तिनिकेतनस्थविश्वभारत्यध्यापक-श्रीहरिदासमित्र-एम्-ए-लिखिताङ्गलभूमिकया समलङ्कृतम्। मूल्यम्—५) रौप्यकपञ्चकम्

# विंशतितमः प्रकाशः

—:*:*:—

[ मन्त्राणां पुरश्चरणकथनम् ]

अथ वक्ष्यामि म[1]न्त्राणां पुरश्चरणमुत्तमम् ॥ १ ॥

[ पुरश्चरणं विना मन्त्रसिद्ध्यभावः ]

विना ये[2]न न सि[3]द्धः स्यान्मन्त्रो वर्षशतैरपि ।
तत् पुरश्चरणं नाम मन्त्रसिद्ध्यर्थमात्मनः ॥ २ ॥
जीवहीनो यथा देहः सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽपि [4]तथा मन्त्रः प्रकीर्त्तितः ॥ ३ ॥

[ आदौ पुरश्चरणस्य कर्त्तव्यता ]

तस्मादादौ पुरश्चर्या कर्त्तव्या साधकोत्तमैः ।
येनानुष्ठितमात्रेण वशमायान्ति देवताः ॥ ४ ॥

[ पुरश्चरणेतिकर्त्तव्यता ]

अथ पूर्वमुपोष्याथ कृतनित्यक्रियः शुचिः ।
द्विजदेवगुरून् भक्त्या संपूज्य मन्त्रविद्वरः ॥ ५ ॥

---

१। अथेति। पुरश्चरणलक्षणमुक्तं हंसमाहेश्वरतन्त्रे—

जपहोमौ तर्पणञ्च सेको ब्राह्मणभोजनम्।
पञ्चाङ्गोपासनं लोके पुरश्चरणमुच्यते॥

रामार्चनचन्द्रिकायामपि—

गुरोर्लब्धस्य मन्त्रस्य प्रसन्नेन यथाविधि ।
पञ्चाङ्गोपासने सिद्धिः पुरश्चैतद् विधीयते । इति ।

३। जीवहीन इति। पद्यमिदं गन्धर्वतन्त्रे सप्तविंशपटलेऽपि, तत्र च 'देही'ति पाठ उपलभ्यते, स च देहार्थक एवेति पुरश्चरणबोधिनी ।

---

1. 'तन्त्राणां' A-B. 2. 'केन' B. 3. 'सिद्धिः' A-B. 4. 'यथा' A.

गणेशं साधकांश्चैव पितॄंश्चैव प्रपूजयेत् ।
सर्वेषा[1]मेव मन्त्राणां विधानाञ्च तथैव च ॥ ६ ॥
गुरोराज्ञां समादाय शुद्धान्तःकरणो बुधः ।
[2]यत्नात् पुरस्क्रियां कुर्याद् गुरुं वा कारयेद् बुधः ।
गुरोरभावे विप्रोऽन्यः सर्वप्राणिहिते रतः ॥ ७ ॥

[ पुरश्चरणस्थानानि ]

पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम् ।
तीर्थप्रदेशः सिन्धूनां सङ्गमः पावनं वनम् ॥ ८ ॥
उद्यानानि वि[3]चित्राणि विल्वमूलं तटं गिरेः ।
तुलसीकाननं गोष्ठं वृषशून्यं सुरालयम् ॥ ९ ॥
अश्वत्थामलकीमूलं गोशालं जलमध्यतः ।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ।
एषामन्यतमं स्थानमाश्रित्य जपमाचरेत् ॥ १० ॥

---

रुद्रयामले च—

पुरश्चरणसम्पन्नो मन्त्रो हि फलदायकः ।
ततः पुरस्क्रियां कुर्यान्मन्त्रवित् सिद्धिकाङ्क्षया ॥
किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ।
रहस्यानाञ्च मन्त्राणां यदि न स्यात् पुरस्क्रिया ॥
पुरस्क्रिया हि मन्त्राणां प्रधानं जीवमुच्यते ॥ इति ।

८—१० । पुण्यक्षेत्रमित्यादि । योगिनीहृदयेऽपि अयमेव पाठः । 'एषामन्यतम'-मित्यादि पद्यार्द्धन्तु "साधने तु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम्" इत्येवमुपलभ्यते तत्र । स्थाननिर्णयश्च प्रपञ्चसारसंग्रहे—

समुद्रतीरेऽप्यथवाऽद्रिशृङ्गे समुद्रगाणां सरिताञ्च पाटे ।
जपेद् विविक्ते निजवर्यगेहे विष्णोर्गृहे वा पुरुषो मनस्वी ॥

---

1. '-श्चैव' C. 2. 'यत्नादि'त्यादिपादद्वयी नास्ति A-B. 3. 'विविक्तानि' A.

[ पुरश्चरणे भोजननियमाः ]

भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा ।
पयो[1]वा मूलमेवात्र [2]यद्वा यत्रोपलभ्यते ॥ ११ ॥

[ पुरश्चरणे वर्ज्याणि ]

वि[3]वर्जयेन्मधु क्षारं लवणं तैलमेव च ।
[4]ताम्बूलं कांस्यपात्रञ्च दिवाभोजनमेव च ॥ १२ ॥

[ मन्त्रजपानन्तरकर्त्तव्यानि ]

मन्त्रं जप्त्वाऽन्नपानीयैः स्नानाचमनभोजनम् ।
कुर्याद् यथोक्तविधिना त्रिसन्ध्यं देवतार्चनम् ॥ १३ ॥
त्रिसन्ध्यमेकसन्ध्यं वा न मन्त्रं केवलं जपेत् ॥ १४ ॥

---

शिवगीतायामपि—

बिल्ववृक्षं समाश्रित्य यो मन्त्रान् विविधान् जपेत् ।
एकेन दिवसेनैव तत् पुरश्चरणं भवेत् ॥
यस्तु बिल्वमये नित्यं कुटीं कृत्वा जपेन्नरः ।
सर्वे मन्त्राः प्रसिध्यन्ति जपमात्रेण केवलम् ॥ इत्यादि ।

गङ्गामधिकृत्य कुलोड्डीशे—

न वेदी नासनञ्चात्र न पूजा न विधिस्तथा ।
उक्तसंख्यं जपं कृत्वा होमाद्यन्तु समाचरेत् ॥ इति ।

वायवीयसंहितायाञ्च—

सूर्यस्याग्रे गुरोरिन्दोर्दीपस्य च जलस्य च ।
विप्राणाञ्च गवाञ्चैव सन्निधौ शस्यते जपः ॥ इति ।

निबन्धे षोडशपटले—

वीराणान्तु महानद्यास्तीरं देवालयस्तथा ।
एकलिङ्गं श्मशानन्तु शून्यागारं चतुष्पथम् ॥

---

1. 'पयो मूलं फलं वाऽपि' C. 2. 'यत्र यचो-' A. 3. 'विसर्जये' C. 4. 'ताम्बूलमि'त्यादि पादद्वयी नास्ति A.

[ गुरुवन्दनम् ]

एकग्रामे स्थितो नित्यं गत्वा वन्देत वै गुरुम् ।
गुरुरेव परं ब्रह्म तस्मादादौ तमर्च्चयेत् ॥ १५ ॥

[ नित्यनैमित्तिकादिकर्त्तव्यता ]

नित्यं नैमित्तिकं कुर्यात् संसर्गं साधुभिः सह ।
स्नायाच्च पञ्चगव्येन केवलामलकेन वा ॥ १६ ॥

[ स्नान-तर्पणोपदेशः ]

शक्तौ त्रिसवनस्नान[1]मन्यथा द्विः सकृच्च वा ।
अस्नातस्य फलं नास्ति न चातर्पयतः पितॄन् ॥१७॥

[ त्याज्यानि ]

स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् ।
असत्यभाषणञ्चैव कौटिल्यं दूरतस्त्यजेत् ॥ १८ ॥
वर्जयेद् गीतवाद्यादिश्रवणं नृत्यदर्शनम् ।
अभ्यङ्गं गन्धलेपञ्च पुष्पधारणमेव च ॥ १९ ॥
मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्ज्जयेत् ।
अस्नानश्च द्विजान् शूद्रान् स्त्रियो नैव स्पृशेत्त[2]दा ॥२०॥
त्यजेदुष्णोदके स्नानमनिवेदितभोजनम् ।
प्राणिहिंसां न कुर्वीत पुरश्चरणकृन्नरः ॥ २१ ॥

[ अन्यतो वस्तुग्रहणनिषेधः ]

विहाय वह्निं नहि वस्तु किञ्चिद्
ग्राह्यं परेभ्यः सति सम्भवे च ।
[3]असम्भवे तीर्थवहिर्विशुद्धात्
पर्वातिरिक्ते प्रतिगृह्य जप्यात् ॥ २२ ॥

1 '-मशक्तौ द्विः सकृच्च वा' C. 2. 'तथा' C. 3. 'अस्नारतीर्थेषु वहि-' A.

[ दशाविशेषे जपनिषेधः ]

उष्णीषी कञ्चुकी नग्नो मुक्तकेशोऽप्यनावृतः ।
[1]अपवित्रकरोऽशुद्धः प्र[2]सर्पन्न जपेत् क्वचित् ॥ २३ ॥

अनावृतकरो भूत्वा शिरसा प्रावृतो[3]ऽथवा ।
चिन्ताव्याकुलचित्तो वा क्रुद्धो भ्रान्तस्त्व[4]रान्वितः ॥२४॥

मुक्तकच्छः शयानो वा गच्छन्नु[5]त्थित एव वा ।
रथ्यायामशि[6]वे स्थाने न जपेत्तिमिरालये ॥ २५ ॥

[ जपे विशेषोपदेशः ]

शनैः शनैः परिस्प[7]ष्टं न द्रुतं न विलम्बितम् ।
न न्यूनं नातिरिक्तञ्च जपं कुर्याद्दिने दिने ॥ २६ ॥

[ जपे दिनलङ्घननिषेधः ]

नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत् ।
दिवसा[8]तिक्रमात्तेषां सिद्धिहानिः प्रजायते ॥ २७ ॥

[ जपे कालकथनम् ]

अनन्यमानसः प्रायो जपेन्मध्यन्दिनावधि ।

[ जपे वस्त्रनियमः ]

नैकवासा जपेन्मन्त्रं बहुवासाकुलोऽपि वा ॥ २८ ॥

[ जपतो जपत्यागकारणानि ]

पतितानामन्त्यजानां दर्शने भाषणे श्रुते ।
क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ॥ २९ ॥

---

२५ । रथ्यायामिति । निन्दितस्थानमुक्तं निबन्धे षोडशपटलेऽपि—
राजानः सचिवा यत्र पुरुषाः प्रभवो जनाः ।
चरन्ति येन मार्गेण न वसेत् तत्र साधकः ॥ इति ।

---

1. 'अपवित्र' इत्यादि पादद्वयी नास्ति A. 2. 'प्रलपन्न' C. 3. 'ऽपि' C. 4. 'श्रराथितः' A. 5. 'गच्छन् स्थगित-' A. 6. '-शिवस्थाने' C, '-यां निवेशस्थाने' A. 7. 'स्पष्टो' A. 8. 'दिवसानु-' A.

[ पुनर्जपे कर्त्तव्यानि शौचादीनि ]

उत्थायाचम्य तत्प्राप्तौ प्राणायामं षडङ्गकम् ।

[ एवं कृत्वा प्रात्यहिकजपकरणम् ]

कृत्वा सम्यग् जपेच्छेषं यद्वा सूर्यादिदर्शनम् ॥ ३० ॥

[ पुरश्चरणे शय्यानियमः ]

शयीत [1]कुशशय्यायां शुचिवस्त्रधरः सदा ।
प्रत्यहं क्षालयेच्छय्यामेकाकी निर्भयः स्वपेत् ॥ ३१ ॥

[ देवीपूजाधारकथनम् ]

लिङ्गस्थां पूजयेद्देवीं पुस्तकस्थां तथैव च ।
[2]स्थण्डिलस्थां महामायां पादुकाप्रतिमासु च ॥ ३२ ॥
चित्रिते विदिनेनाथ जलस्थां वाऽपि पूजयेत् ।

[ खड्गादीनां विशेषः ]

पञ्चा[3]शदङ्गुलं खड्गं त्रिशिखञ्च त्रिशूलकम् ॥ ३३ ॥
शिलायां पर्वतस्याग्रे तथा पर्वतगह्वरे ।
देवीं संपूजयेन्नित्यं भक्तिप्रभासमन्वितः ॥ ३४ ॥

[ देशविशेषे देवीपूजाफलम् ]

वाराणस्यां कृता पूजा सम्पूर्णफलदायिनी ।
ततश्चतुर्गुणा प्रोक्ता पुरुषोत्तमसन्निधौ ॥ ३५ ॥
ततोऽपि[4] द्विगुणा पूजा द्वारवत्यां विशेषतः ।
सर्वक्षेत्रेषु पीठेषु पूजा द्वारवतीसमा ॥ ३६ ॥
विन्ध्ये शतगुणा प्रोक्ता गङ्गायामपि तत्समा ।
आर्यावर्त्ते मध्यदेशे ब्रह्मावर्त्ते तथैव च ॥ ३७ ॥

---

1. 'शुद्ध' C. 2. 'स्थण्डिलस्थामि'त्यादिपञ्चदशश्लोका न सन्ति C. 3. 'पञ्चादश-कुशं' (?) A. 4. 'ततोऽति' B-C.

विन्ध्ये च फलदा पूजा प्रयागे पुष्करे तथा ।
[1]ततश्चतुर्गुणा प्रोक्ता करतोयानदीजले ॥ ३८ ॥
तस्माच्चतुर्गुणा प्रोक्ता नन्दिकेश्वरसन्निधौ ।
ततः सिद्धेश्वरीयोनौ तस्माद् द्विगुणसिद्धिदा ॥ ३९ ॥
[2]ततश्चतुर्गुणा प्रोक्ता लौहित्यनदकुण्डके ।
तत्समा कामरूपेण[3] सर्वत्रैव जले स्थले ॥ ४० ॥
सर्वश्रेष्ठो यथा विष्णुर्लक्ष्मीः सर्वोत्तमा यथा ।
देवीपूजा तथा शस्ता कामरूपे सुरालये ॥ ४१ ॥
देवीक्षेत्रं कामरूपं विद्यते न हि तत्समम् ।
अन्यत्र [4]विरला देवी कामरूपे गृहे गृहे ॥ ४२ ॥
ततः शतगुणं प्रोक्तं नीलकूटस्य मण्डलम् ।
ततोऽपि द्विगुणं प्रोक्तं हैरके शिवलिङ्गके ॥ ४३ ॥
ततः शतगुणं प्रोक्तं कामाख्यायोनिमण्डले ।
कामाख्यायां महामाया-पूजां यः कृतवान् सकृत् ॥४४॥
स चेह लभते कामान् परत्र शिवरूपताम् ।
न तस्य सदृशोऽप्यस्ति कृति[5] तस्य न विद्यते ।
[6]वामकेश्वरतन्त्रेषु प्रभुणोक्तमिदं मतम् ॥ ४५ ॥

[ पुरश्चरणविधिः ]

अथातः संप्रवक्ष्यामि विधानमत्र यद्भवेत् ।

[ भूमिसंस्कारे कीलकस्थापनम् ]

अष्टौ च कीलकान् कुर्यादभीष्ट[7]सहितान् पुनः ॥ ४६ ॥

---

४६—४८ । अष्टौ च कीलकानिति । कीलकारोपणमुक्तं पुरश्चरणबोधिनीधृत-निबन्धे—

---

1. 'तत' इत्यादि 'सिद्धिदे'त्येन्त-पादषट्कं नास्ति B. 2. 'तस्माच्चतुर्गुणा' A. 3. '-रूपे च' A. 4. 'विमला' A. 5. 'कृती' A. 6 'कामके-' B-C. 7. '-दभीष्टि' A.

मूलमन्त्रास्त्रमन्त्रेण प्रत्येकं शतमष्ट च ।
अभिमन्त्र्य अष्टदिक्षु भूमौ तान् विलिखेत् सुधीः ॥४७॥

[ कीलेषु दिक्पतिपूजनम् ]

तेषु कीलेषु पूर्वादिक्रमतो दिक्पतीनपि ।
अष्टौ संपूज्य गन्धाद्यैः [1]कदलीमोदकादिभिः ॥ ४८ ॥

[ दिक्पतिभ्यो बलिदानं वास्तुदेवतापूजनञ्च ]

बलिं तेभ्योऽथवा दत्त्वा पूजयेद् वास्तुदेवताम् ।
क्षेत्रे च कीलिते मन्त्री न विघ्नैः परिभूयते ॥ ४९ ॥

[ क्षेत्रपालादीनां पूजा ]

क्षेत्रपालं गणेशञ्च वटुकं योगिनीं तथा ।
पूजयेद् गन्धपुष्पाद्यैस्ततः क्षेत्रं समाश्रयेत् ॥ ५० ॥

---

क्षीरिवृक्षोद्भवान् कीलानस्त्रमन्त्राभिमन्त्रितान् ।
निखनेद् दशदिग्भागे तेष्वस्त्रञ्च प्रपूजयेत् ॥
क्षेत्रे च कीलिते मन्त्री न विघ्नैः परिभूयते ॥

कीलकारोपणे निषिद्धस्थानमुक्तं कालीकुलामृते षष्ठपटले—
महातीर्थे शून्यगेहे देवतायतनेऽपि वा ।
न कीलकान् खनेत् तत्र जपमात्रेण सिध्यति ॥ इति ।

विशेषस्तु निबन्धे—
सुदर्शनास्त्रं संजप्य चाष्टोत्तरशतं ततः ।
वेदिकादशदिग्भागे तान् कीलान् निखनेत् क्रमात् ॥
ॐ ये चात्र विघ्नकर्त्तारो भुवि दिव्यन्तरिक्षगाः ।
विघ्नभूताश्च ये चान्ये मम मन्त्रस्य सिद्धिषु ॥
ममैतत् कीलितं क्षेत्रं परित्यज्य विदूरतः ।
अपसर्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे ॥
अनेन निखनेत् कीलांस्तेषु लोकेश्वरान् यजेत् । इति ।

---

1. 'कदलीमोदका'द्यष्टादश पादा न सन्ति A-पुस्तके ।

[ कूर्मचक्रलिखनम् ]

क्षेत्रमध्यं समाश्रित्य कुर्मचक्रं लिखेत् सुधीः ।
दीपस्थां गुटिकां कुर्यात् सितपत्रनिवा[1]रिणीम् ॥ ५१ ॥

---

५१ । क्षेत्रमध्यमिति । कूर्मचक्रप्रमाणमुक्तं पुरश्चरणबोधिनीधृतनिबन्धे—

"यत्र ग्रामे जपेन्मन्त्री तत्र कूर्मं विचिन्तयेत् ।
दीपस्थानं समासाद्य कृतं कर्म फलप्रदम् ॥

दीपस्थानं यथा गौतमीये—

दीपस्थानं द्विधा प्रोक्तं मुखं पृष्ठञ्च मन्त्रिणः ।
दीपस्थाने भवेत् सिद्धिर्नान्यथा कोटिजापनैः ॥

निबन्धे—

चतुरस्रं भुवं भित्त्वा कोष्ठानां नवकं लिखेत् ।

कूर्मचक्रनिषेधस्थानमुक्तं गौतमीये—

पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे ।
यदि कुर्यात् पुरश्चर्यां तत्र कूर्मं न चिन्तयेत् ॥

वैशम्पायनसंहितायाञ्च—

पुण्यक्षेत्रं गृही तीर्थं देवतायतनं शुभम् ।
विल्वमूलं समुद्रश्च वनमुद्यानमेव च ॥
एषु स्थानेषु विप्रेन्द्र कूर्ममुद्रां न चिन्तयेत् ॥ इति ।

कूर्मचक्रं यथा—

पूर्वकोष्ठादि विलिखेत् सप्तवर्गाननुक्रमात् ।
क्षमीशे मध्यकोष्ठे स्वरान् युग्मक्रमाल्लिखेत् ।
दिक्षु पूर्वादितो यत्र ग्रामाद्यक्षरसंस्थितिः ॥
मुखं तत् तस्य जानीयाद्धस्तावुभयतः स्थितौ ।
कोष्ठे कुक्षी उभे पादौ द्वे शिष्टं पुच्छमीरितम् ।
क्रमेणानेन विभजेन्मध्यस्थमपि भागतः ॥

---

1. '-यामिनीम्' C.

मुखस्थो लभते सिद्धिं करस्थः स्वल्पजीवनः ।
उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात् ॥
पुच्छस्थः पीड्यते मन्त्री बन्धनोच्चाटनादिभिः ॥
कूर्मचक्रमिदं प्रोक्तं मन्त्रिणां सिद्धिदायकम् ॥

पिङ्गलायाम्—

कूर्मचक्रमविज्ञाय यः कुर्याद् जपयज्ञकम् ।
तस्य यज्ञफलं नास्ति सर्वानर्थाय कल्पते ॥




यद्यपि ग्रन्थकृता पूर्णानन्देन तृतीयप्रकाशे कूर्मचक्रमभिहितम्, तथाप्यत्र प्रकार-विशेषो वर्तते तन्त्रसारे पुरश्चरणबोधिन्यां चेति टिप्पण्यां पुनरुल्लिख्यते ।

[ एवं पूर्वदिने भूमेः संस्कारः ]

इति भूमेस्तु संस्कारं कुर्यात् पूर्वदिने सुधीः ।

[ आरम्भदिने प्रातःकृत्यादि ]

अथ प्रातः समुत्थाय कृतनित्यक्रियः [1]शुचिः ॥ ५२ ॥

[2]रजोभिर्धूपदीपाद्यैः कल्पयेन्मण्डलोज्ज्वलम् ।

कृत्वा कल्पोक्तविधिना पूजयेत् परमेश्वरीम् ॥ ५३ ॥

[ जपे उपवेशनादिप्रकारः ]

पद्मासनः प्राग्वद[3]नोऽप्रलापी

शुद्धेन्द्रियस्त[4]र्जनिवर्जिताभिः ।

अक्ष[5]स्रजात्माङ्गुलिभिर्यजेत्तां

नातिद्रुतं नातिवि[6]लम्बितञ्च ॥ ५४ ॥

[ प्रतिदिनजपसंख्या ]

यावत्संख्यं जपेदह्नि [7]पूर्वस्यां तावदेव तु ।

दिनान्तरेऽपि प्रजपेदन्यथा सिद्धिरोधकृत् ॥ ५५ ॥

[ शिवप्रतिमादि सन्निधौ जपोपदेशः ]

शिवस्य सन्निधाने वा सूर्याग्न्योश्च गुरोरपि ।

दीपस्य ज्वलितस्यापि जपकर्म समारभेत् ॥ ५६ ॥

[ प्रातरारभ्य मध्याह्नपर्यन्तं जपः कर्त्तव्यः ]

प्रातरारभ्य मन्त्रज्ञो जपेन्मध्यन्दिनावधि ।

[ जपे आसननिर्णयः ]

अथासनं प्रवक्ष्यामि येन सिद्धिर्भवेत् किल ॥ ५७ ॥

---

५७-५८। अथासनमित्यादि। आसने विशेष उक्तः पुरश्चरणबोधिन्यां

---

1. 'सुधीः' C. 2. 'पञ्चभि' C. 3. '-वदनी प्रलापी' A. 4. '-र्जविराजिताभिः' A, '-र्जविवर्जिता-' B. 5. '-प्रलाङ्गलिभिः' ? A. 6. 'विलम्बनञ्च' A. 7. 'पूर्वास्यं' A.

कुशासने ज्ञानसिद्धिः श्रीकामो व्याघ्रचर्मणि ।
ऊर्णासने दुःखहानिः कम्बले सर्वसिद्धयः ॥ ५८ ॥

"हंसमाहेश्वरे—

कम्बलं कोमलं कौशं दारवं कर्मसाधनम् ।
एतेषामासनं ग्राह्यं चर्मासनं सुरेश्वरि ॥
लोम्नि चैव यदासीनस्तदा सर्वं विनश्यति ।
लोमस्पर्शनमात्रेण सिद्धिहानिः प्रजायते ॥

तथाच निर्लोमचर्मासनं कार्यमित्यर्थः ।

काम्यार्थं कम्बलञ्चैव श्रेष्ठञ्च रक्तकम्बलम् ।
कृष्णाजिने ज्ञानसिद्धिर्मोक्षं श्रीव्याघ्रचर्मणि ।
कुशासने मन्त्रसिद्धिर्नात्र कार्या विचारणा ॥
धरण्यां दुःखसम्भूतिर्दौर्भाग्यं दारुजासने ।
वंशासने दरिद्रः स्यात् पाषाणे व्याधिपीडनम् ॥
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ।
जपध्यानतपोहानिं वस्त्रासनं करोति हि ॥

तत्र वस्त्रासनं केवलमेव निषिद्धं, 'वस्त्रासनं रोगहरमि'त्यादिना विशिष्टस्य फलजनकत्वाभिधानात्, 'चेलाजिनकुशोत्तरमि'ति भगवद्वचनाच्च। अत्र सर्वाधः कुशासनं तदुपरि चर्म, तदुपरि वस्त्रम्—

ततस्तु साधको नित्यं सर्वाधः कौशमासनम् ।
अजिनं स्थापयंस्तत्र कुर्याद् वस्त्रावृतं द्वयम् ॥

इति रत्नगर्भधृततन्त्रार्णवात्। एवं दारुजासनं केवलमेव निषिद्धम्, कुशादिसमभिव्याहारेण तु विहितम्, "दारवं कर्मसाधन'मित्येकवाक्यत्वादिति बोध्यम्। अथवा काष्ठासननिषेध आम्रादिकाष्ठविषयः, विधिस्तु गाम्भार्यादिपरः। ताराभक्तिसुधार्णवे च—

तृणपल्लवकाष्ठानि पाषाणं मृन्मयं तथा ।
वंशासनञ्च वस्त्रञ्च केवलं क्षितिमासनम् ॥
एवमष्टविधं देवि चासनं परिवर्जयेत् ॥ इति ।

ब्रह्मयामलवचनमपि तत्परं व्याख्येयम्। गौतमीयेऽपि—

तथा मृद्वासने मन्त्री पटाजिनकुशोत्तरे । इति ।

श्वेतं वा रक्त[1]वसनं स्वासनाय प्रकल्पयेत् ।

[ यतिब्रह्मचारिणोर्विशेषः ]

विशेद्[2] यतिर्ब्रह्मचारी कृष्णसाराजिने सदा ॥ ५६ ॥

[ आसनपरिमाणम् ]

एकहस्तं द्विहस्तं वा चतुरङ्गुलमुच्छ्रितम् ।
स्वस्तिके[3] वाथ पद्मे वा विशेत्तत्र निराकुलम् ॥ ६० ॥

[ भूम्याद्यासनानां फलवैशिष्ट्यम् ]

भू[4]मौ भूपभयं कुलक्षयकरं वंशासने रोगदम् ।
काष्ठञ्चैव तथासनं प्रकुरुते शैलं महादुःखदम् ।
पत्रं दुःखकरं जलं भयकरं तन्तुश्च विद्वेषणम् ।
मेषं क्रै (त्रै) भूमिकमासनादि सकलं
मोक्षादिसिद्धिप्रदम् ॥ ६१ ॥

[ अभिचारादिकर्मस्वासनविशेषः ]

अभिचारे कृष्ण[5]रक्तं वश्यादिसर्वकर्मणि ।
शान्तिके धवलः प्रोक्तः सर्वार्थश्चित्रकम्बले ॥ ६२ ॥

---

योगिनीहृदये—

नादीक्षितो विशेज्जातु कृष्णसाराजिने गृही ।
विशेद् यतिर्वनस्थश्च ब्रह्मचारी च भिक्षुकः ॥

त्रिपुरामहार्णवे—

'न भूमौ व्यजने पत्रे', न वसेदित्यादिः ।

कौलिकानामासनविशेषस्तु ताराभक्तिसुधार्णवधृतमत्स्यसूक्ते—

मृदु कम्बलमासीनोऽप्यन्येषु कोमलेषु वा ।
विष्टरे वा सुखासीनः साधयेत् सिद्धिमुत्तमाम् ॥ इति ।

---

1. 'वचनं' A. 2. '-दितिब्रह्म-' A. 3. 'स्वस्तिकेनाथ पद्मेन' C. 4. 'भूमौ' इत्यादि पद्यं नास्ति A. 5. 'कृष्णवस्त्रं, रक्तं वश्यादि-' C.

[ मालानिरूपणम् ]

अथ मा[1]लाविधानञ्च प्रवक्ष्यामि समासतः ।
अकारादिक्षकारान्ता वर्णमाला प्रकीर्त्तिता ॥ ६३ ॥

[ सबिन्दुवर्णोच्चारणानन्तरं मन्त्रजपनिरूपणम् ]

सबिन्दुवर्णमुच्चार्य पश्चान्मन्त्रं जपेत् सुधीः ।

[ मालामेरुनिरूपणम् ]

अनुलोमविलोमेन क्षकारो मेरुरुच्यते ॥ ६४ ॥

[ मालाविशेष-फल-निरूपणम् ]

अथ मुक्ताफलमयी चतुर्वर्गप्रदायि[2]नी ।
वाक्सिद्धिश्च तथा माला स्फाटिकेन [3]चरेत् किल ॥६५॥
[4]रक्ताऽक्षमालिका मोक्षे भवेत् सर्वसमृद्धिदा ।
[5]प्रबालमाला वश्ये तु सर्वकामार्थसिद्धिदा ।
पुत्रजीवकमाला तु लक्ष्मी-विद्याप्रदायिनी ॥ ६६ ॥
[6]क्रमाख्या मालया लक्ष्मीर्जायते सुमहीयसी ।
रक्तचन्दनमाला तु वश्या सौभाग्यदा भवेत् ॥ ६७ ॥
सौवर्णरौप्यघटिता माला कामान् प्रयच्छति ।
निर्मिता शङ्खमणिभिः कुरुते कीर्त्तिमव्ययाम्[7] ।
सर्वै रेभिर्विरचिता माला स्यान्मुक्तये नृणाम् ॥ ६८ ॥

[ मालायां संख्यानिरूपणम् ]

पञ्चविंशतिभिर्बीजैर्माला मो[8]क्षं प्रकल्पयेत् ।
सप्तविंशतिभिः पुष्टौ त्रिंशद्भिर्मोक्षकर्मणि ॥ ६९ ॥

---

1. 'नानाविधा-' A. 2. '-सिका' C. 3. 'भवेत् किल' A., 'विनिष्ठिता' C. 4. 'रुद्राक्ष' C. 5. 'प्रबाले'त्यादि-पादद्वयी नास्ति A-B. 6. 'पद्माख्यमालया' C. 7. 'निर्मिते'त्यादि-पादद्वयी नास्ति A-B. 8. 'मोक्षे' C. A-B.

त्रिंशद्भिः पञ्चपूर्वाभिरभिचारे च कर्मणि ।
पञ्चाशद्भिश्च या माला सर्वकर्मणि सा शुभा ॥७०॥
चतुरा[1]द्या भ[2]वेत् सा तु सर्वकर्मफलप्रदा ।
अष्टोत्तरशतैः सर्वसिद्धिः स्यादपवर्गदा ॥ ७१ ॥

[ काश्यां सिद्धिदोषकथनम् ]

[3]काश्यामेव महादोषा न तु सिध्यन्ति साधकाः ।

[ सूत्रवर्णकथनम् ]

शुक्लं रक्तं तथा कृष्णं शान्तिवश्याभिचारके ॥ ७२ ॥

[ सूत्र-सम्पातनम् ]

सूत्रं सम्पातयेद् विद्वान् पट्टसूत्रमथापि वा ।

[ सूत्र-तन्तु-विशेषेण मालाविशेषग्रन्थनम् ]

कार्पासैर्वैष्णवी माला पद्मसूत्रैरथापि वा ॥ ७३ ॥
ऊर्णाभिर्वा फलैर्वापि शैवी माला प्रकीर्त्तिता ।

[ कल्पोक्तसंख्यया जपकथनम् ]

गृहीत्वा संस्कृतां मालां चन्दनेन प्रपूजिताम् ॥ ७४ ॥
समाश्रित्य जपेद् विद्वान् कल्पमानेन साधकः ।

[ होमसंख्यानियमः ]

[4]संपूर्णेन प्रजप्त्वा वै जपसंख्यादशांशतः ॥ ७५ ॥

---

७०-७१ । त्रिंशद्भिरिति । अभिचारकर्मणि पञ्चत्रिंशद्भिर्जपः कार्यः चतुःपञ्चाशत्संख्याका माला सर्वकर्मफलप्रदा भवतीत्यर्थः ।

७५-७६ । संपूर्णेनेति । तथाच तत्तत्कल्पोक्तपूर्णसंख्यावधिक-मन्त्रजपानन्तरं तद्दशांशं तच्चतुर्थांशं वा स्वाहान्तं मन्त्रमुच्चार्य पूर्वपटलोक्तलक्षणकुण्डे जुहुयात् ।

---

1. 'चतुरास्या' 2. 'भवेदेषा काम्यकर्मफलप्रदा' C. 3. 'अधिका स्यान्महादोषो' C.
4. 'संख्यापूर्णो निजद्रव्यैर्जप-' C.

यद्वा जप[1]चतुर्थांशं स्वाहान्तं मन्त्रमुच्चरन् ।
यथोक्तकुण्डे जुहुयाद् यथाविधि विधानतः ॥ ७६ ॥

[ अत्र प्रकारान्तरम् ]

अथवा [2]पूजयेज्जप्त्वा जुहुयात्तद्दशांशतः ।

[ तर्पणकथनम् ]

ततो होमदशांशेन जले संपूज्य देवताम् ॥ ७७ ॥
[3]सायुधपरिवारान्तां देवीं सलिलमध्यगाम् ।
तर्पयामीति मन्त्रेण तर्पयेद्देवतामुखे ॥ ७८ ॥

[ तर्पणे वस्तुनियमः ]

तर्पयेत् कुसुमैः सर्वैः [4]सर्वापत्-परिशान्तये ।
घृतैः पूर्णायुषः सिद्ध्यै च क्षौद्रैः सौभाग्यसिद्धये ॥ ७९ ॥
दुग्धैरारोग्यसंसिद्ध्यै च त्रिभिरैश्वर्यसिद्धये ।
नारिकेलोदकैः प्रीत्यै हिमतोयैर्नृपाप्तये ।
सर्वार्थसिद्धये तोयैरभिषिञ्चेज्जगन्मयीम् ॥ ८० ॥

---

शाक्तानन्दतरङ्गिण्याञ्च—

स्वकल्पोक्तक्रमेणैव जपं कृत्वा वरानने ।
होमयेत् तद्दशांशेन तद्दशांशेन तर्पणम् ॥

इत्याद्युक्तम् । निबन्धे अष्टादशपटले च—

जपान्ते प्रत्यहं मन्त्री होमयेत् तद्दशांशतः ।
तर्पणञ्चाभिषेकञ्च तत्तद्दशांशतः प्रिये ।
प्रत्यहं भोजयेद् विप्रान् न्यूनाधिकप्रशान्तये ॥
अथवा सर्वसम्पूर्त्तौ होमादिकमथाचरेत् ॥

पुरश्चरणचन्द्रिकायाम्—

अथवा लक्षसंख्यायाः संपूर्त्तौ होममाचरेत् ।
किंवा यस्य जपो यावांस्तत्पूर्त्तौ होममाचरेत् ॥ इति ।

---

1. 'चतुर्मासं' 2. 'प्रत्यहं' C. 3. 'स चक्रां' C. 4. 'सर्वता-' A-B.

[ अभिषेकनिरूपणम् ]

तर्पणस्य दशांशेन [1]नमोऽन्ते मूलमुच्चरन् ।
अभिषिञ्चेत् स्वमूर्द्धानं जलैः कुम्भाख्यमुद्रया ॥ ८१ ॥

[ ब्राह्मणभोजननिरूपणम् ]

मार्जनस्य दशांशेन कुर्याद् ब्राह्मणभोजनम् ॥ ८२ ॥

[ प्रकारान्तरेणाङ्गनिरूपणम् ]

अथवाऽन्यप्रकारेण [2]मन्त्रजापी सुखं [3]व्रजेत् ।
पूजा त्रैकालिकी नित्यं जपस्त[4]र्पणमेव च ।
होमो ब्राह्मणभुक्तिश्च जपाङ्गेयं पुरस्क्रिया ॥ ८३ ॥

[ होमाद्यशक्तौ तत्तत्संख्याद्विगुणादिजपः ]

यद् यदङ्गं विहीयेत तत्संख्या[5]द्विगुणं जपम् ।
कुर्वीत त्रिचतुःपञ्चसंख्यया जातिभेदतः ॥ ८४ ॥

[ मन्त्रदुष्टत्वकथनम् ]

एकमङ्गं विहीयेत [6]मन्त्रो दुष्टत्वमाप्नुयात् ॥ ८५ ॥

[ उत्तमभोजनदाने सर्वस्य सफलता ]

अन्नैश्च विविधैश्चैव [7]पदार्थैः षड्रसान्वितैः ।
सुभोजितेषु [8]सर्वेषु सर्वं हि सफलं भवेत् ॥ ८६ ॥

[ गुरवे दक्षिणादानम् ]

गुरवे दक्षिणां दद्याद् यथाविभवपूर्वकम् ॥ ८७ ॥

---

८४। यद् यदङ्गमिति। तथा च ब्राह्मणो होमाशक्तौ होमसंख्याद्विगुणं जपं कुर्यात्, क्षत्रियस्तु त्रिगुणं, वैश्यश्चतुर्गुणं, शूद्रः पञ्चगुणमिति ।

---

1. 'नमोऽन्ते' इत्यादि-पादचतुष्टयं नास्ति C. 2. 'मनु' A. 3. 'भवो-' C. 4. 'स्तवन' A. 5. 'द्विगुणो जपः' A. 6. 'नैवेद्यैः' A. 7. 'मन्त्रान्नष्टमवाप्नुयात्' C. 8. 'विप्रेषु' C.

[ ज्ञाति-द्विजपूजा ]

ज्ञातीन् द्विजान् परं भक्त्या पूजयेन्मधुमांसकैः ।
एवं कृते पुरश्चर्या साधयेदिष्ट[1]देवताम् ॥ ८८ ॥

[ कृतसङ्कल्पस्य पुरश्चरणस्यात्याज्यता ]

पुरश्चरण[2]काले तु यदि स्यान्मृतसूतकम् ।
तथाऽपि कृतसङ्कल्पी व्रतं नैव परित्यजेत् ॥ ८९ ॥

[ अकृतसङ्कल्पिनः कृत्यम् ]

[3]यदाप्यकृतसङ्कल्पी नित्यनैमित्तिके स्थितः ।
स्नात्वा नित्यन्तु निर्वर्त्त्य[4]मानस्य(।) क्रिययातु वै ॥९०॥
[5]वाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत् ।

[ मानसजपे दोषाभावः ]

न दोषो मानसे जप्ये सर्वदेशे[6]ऽपि सर्वदा ॥ ९१ ॥

[ जपस्य श्रेष्ठत्वम् ]

जपनिष्ठो द्विजश्रेष्ठः सर्वयज्ञफलं लभेत् ।
सर्वेषामेव यज्ञानां जपयज्ञः प्रशस्यते ॥ ९२ ॥

[ पुरश्चरणान्मन्त्रासिद्धौ उपायान्तरकथनम् ]

एवमनुष्ठितो मन्त्रो यदि [7]सिद्धो न जायते ।
उपायास्तत्र कर्त्तव्याः [8]सन्तु शङ्करभाषिताः ॥ ९३ ॥

[ द्रावणादीनामुद्देशः ]

द्रावणं रोधनं वश्यं पीडनं [9]पोष-शोषणे ।
दहनान्तं पुनः कुर्यात्ततः सिद्धो भवेद् ध्रुवम् ॥ ९४ ॥

---

1. 'साधनम्' C. 2. 'मध्ये तु' C. 3. 'यद्यप्यकृत-' C. 4. 'मामल्ये' ? A. 5. 'वाह्यपूजा'दिपादद्वयी नास्ति A-B. 6. 'देवेऽपि' C. 7. 'सिद्धिर्न-' A. 8. 'सप्त C. 9. 'शोषपोषणे' C.

[ द्रावणकथनम् ]

द्रावणं वारुणे बीजे ग्रथिते क्रमयोगतः ।
तन्मन्त्र[1]यन्त्रमालिख्य सिह्लकर्पूरकुङ्कुमैः ॥ ९५ ॥
उशीरचन्दना[2]भ्यान्तु मन्त्रं [3]संलिखितं लिखेत् ।
क्षीराज्यमधुतोयानां मध्ये तल्लिखितं भवेत् ॥ ९६ ॥
पूजनाज्जपनाद्धोमाद् द्रावितः सिद्धिदो भवेत् ।

[ रोधनकथनम् ]

द्रावितोऽपि न सिद्धश्चेद्रोधनं तस्य कारयेत् ॥ ९७ ॥
[4]सारस्वतेन बीजेन संपुटीकृत्य संजपेत् ।

[ वश्यकथनम् ]

एवं रुद्धो भवेत् सिद्धो नो चेत्तद्वश्यमाचरेत् ॥ ९८ ॥
अलक्तं चन्दनं कुष्ठं हरिद्रामदसिह्लकम् ।
एतैः स्वमन्त्रमालिख्य भूर्जपत्रे सुशोभने ।

[ पीडनकथनम् ]

धार्यं कण्ठे भवेत् सिद्धो न चेत्तत् पीडनं चरेत् ॥९९॥
अधरोत्तरयोगेण पदानि परिजप्य च ।
ध्यायेत् स्वदेवतां तद्वदधरोत्तररूपिणीम् ॥ १०० ॥
विद्यामादित्यदुग्धेन लिखित्वा [5]क्रमतः सुधीः ।
तथाभूतेन मन्त्रेण होमः कार्यो दिने दिने ॥ १०१ ॥

---

९५। द्रावणमिति। वारुणं बीजम् 'वं' इति। सिह्लः, यावनः, 'तुरुष्कः पिण्डकः सिह्लो यावन' इत्यमरः ; लोहवान् इति ख्यातः।

९८। सारस्वतेनेति। ऐँ इति बीजं मन्त्रस्यादावन्ते च संयोज्य जपेदित्यर्थः।

---

1. 'मन्त्र-' A. 2. '-भ्याञ्च' C. 3. 'संग्रथितं' C. 4. 'सारस्वतेने'त्यादि-'पाणौ विधारयेदि'त्यन्तश्लोकषट्कं नास्ति A. 5. '-क्रम्य चाङ्घ्रिणा' C.

[ पोषणकथनम् ]

पीडितो लज्जयाविष्टः सिद्धः स्यादथ पोषयेत् ।
बालायास्त्रितयं बीजमाद्यन्ते तस्य योजयेत् ॥ १०२ ॥
गोक्षीरमधुनाऽऽलिख्य विद्यां पाणौ विधारयेत् ॥१०३॥

[ शोषणकथनम् ]

पोषितोऽयं भवेत् सिद्धो न चेत् कुर्वीत शोषणम् ।
विद्याश्च वायुबीजेन मन्त्री कुर्याद् [1]विदर्भताम् ॥१०४॥
एषा विद्या गले धार्या लिखित्वा वरभस्मना ।

[ दहनकथनम् ]

शोषितोऽपि न सिद्धश्चेद्दहनीयोऽग्निबीजतः ॥ १०५ ॥
आग्नेयेन तु बीजेन मन्त्रस्यैकैकमक्षरम् ।
आद्यन्त[2]मध्य ऊर्द्ध्वन्तु योजयेद्दाहकर्मणि ॥ १०६ ॥
ब्रह्मवृक्षस्य तैलेन मन्त्रमालिख्य धारयेत् ।
कण्ठदेशे ततो मन्त्रः सिद्धः स्याच्छङ्करोदितः ॥ १०७ ॥

[ पुरश्चरणानन्तरं गुरुपूजा ]

पुरश्चर्यां विधायैवं गुरुं संपूजयेत् सुधीः ।

[ मन्त्रादीनां गोपनम् ]

गुरुं [3]संपूजयेद्धीमान् मन्त्रं यत्नेन गोपयेत् ।
अक्षमालाश्च मुद्राश्च गुरोरपि न दर्शयेत् ॥ १०८ ॥

[ मन्त्रदेवतागुरुषु भक्तिः कर्तव्या ]

मन्त्रे [4]तु देवतायान्तु तथा मन्त्रविदे गुरौ ।
त्रिषु भक्तिः सदा कार्या सा हि प्रथमसाधना ॥१०९॥

---

1. 'विदर्भिताम्' C. 2. '-मध ऊर्ध्व-' C. 3. 'प्रकाशये-' C. 4. 'तद्देवता-' C.

[ मन्त्रदेवतयोरैक्यम् ]

मन्त्रो [1]हि देवता ज्ञेया देवता मन्त्ररूपिणी ।
द्वयोर्भेदो न कर्त्तव्यो यदीच्छेत् परमं पदम् ॥ ११० ॥

[ मन्त्रसिद्धौ सर्वसिद्धिः ]

सम्यक् सिद्धैकमन्त्रस्य [2]नासिद्धमिह भूतले ॥१११॥

[ एकद्वयादिलक्षसंख्याभेदेन फलभेदः ]

अथ लक्षप्रभेदेन जपमाहात्म्यमुच्यते ।
लक्षमात्रं जपे[3]न्मन्त्री महापापैः प्रमुच्यते ॥ ११२ ॥
लक्षद्वयेन पापानि सप्तजन्मभवान्यपि ।
महापातकमुख्यानि नाशयेन्नात्र संशयः ॥ ११३ ॥
[4]ततो लक्षत्रयं जप्त्वा मन्त्र-यन्त्रकलेवरः ।
महापातककोटीस्तु नाशयेन्नात्र संशयः ॥ ११४ ॥
चतुर्लक्षं जपेन्मन्त्री महावागीश्वरो भवेत् ।
[5]कुबेर इव रत्नाढ्यः पञ्चलक्षजपान्नरः ॥ ११५ ॥
षड्लक्षजपमात्रेण महाविद्याधरो भवेत् ।
सप्तलक्षजपान्मन्त्री खेचरीमेलको भवेत् ॥ ११६ ॥
अष्टलक्षजपान्मन्त्री देवपूज्यो भवेद् ध्रुवम् ।
अणिमाद्यष्टसिद्धीनां नायकः साधको भवेत् ।
वशगास्तस्य राजानो योषितश्च विशेषतः ॥ ११७ ॥
नवलक्षप्रमाणेन जपेत्त्रिपुरसुन्दरीम् ।
रुद्रमूर्त्तिः स्वयं कर्त्ता हर्त्ता साक्षान्न संशयः ॥ ११८ ॥

---

1. 'मन्त्रोऽपि' A. 2. 'नासिद्धिरपि विद्यते' C. 3. 'जपेद् यस्तु' C. 4. 'ततो लक्षत्रय'मित्यादिपद्यमेकं नास्ति A-B. पुस्तकयोः। 5. 'कुबेर' इत्यादि पद्यमेकं नास्ति A.

[ नवलक्षजपे स्थानभेदः ]

मेढ्रस्थाने शिखाकारमाधारे कनकप्रभम् ।
[1]नाभिस्थं सूर्यवि[2]म्बाभं हृदि ज्योतिःशिखा[3]मयम् ॥११९॥
तदूर्द्ध्वे भास्कर[4]मयं कण्ठे दीपशिखा[5]मयम् ।
लम्बिके चन्द्र[6]विम्बाभं [7]भ्रूमध्ये रत्नवद्रुचिः ॥ १२० ॥
नवमे विश्वतेजश्च नवलक्षाणि यानि च ।
एभिः स्थानस्थितो योगी नवलक्षं समभ्यसेत् ॥१२१॥

---

११९—१२१ । मेढ्रस्थाने इत्यादि । नवचक्रविवेकानुसारेणोक्तमिदं, तदूर्द्ध्वे आज्ञाचक्रे, लम्बिके तालुचक्रे इत्यर्थः । नवचक्रविवेकस्तु सौभाग्यलक्ष्म्युपनिषदि—"अथ हैनं देवा ऊचुर्नवचक्रविवेकमनुब्रूहीति । तथेति स होवाच—आधारे ब्रह्मचक्रं त्रिरावृत्ति भगमण्डलाकारं तत्र मूलकं देवशक्तिः, पावकाकारं ध्यायेत्, तत्रैव कामरूपपीठं सर्वकामफलप्रदं भवति । इत्याधारचक्रम् । द्वितीयं स्वाधिष्ठानचक्रं षड्दलं, तन्मध्ये पश्चिमाभिमुखं लिङ्गं प्रबालाङ्कुरसदृशं ध्यायेत्, तत्रैवोड्यानपीठं जगदाकर्षणसिद्धिदं भवति । तृतीयं नाभिचक्रं पञ्चावर्तं सर्पकुटिलाकारं तन्मध्ये कुण्डलिनीं बालार्ककोटिप्रभां तनुमध्यां ध्यायेत् । सामर्थ्यशक्तितः सर्वसिद्धिप्रदा भवति । मणिपूरकचक्रं हृदयचक्रमष्टदलमधोमुखम्, तन्मध्ये ज्योतिर्मयलिङ्गाकारं ध्यायेत् । सैव हंसकला सर्वप्रिया सर्वलोकवश्यकरी भवति । कण्ठचक्रं चतुरङ्गुलम्, तत्र वामे इडा चन्द्रनाडी, दक्षिणे पिङ्गला सूर्यनाडी, तन्मध्ये सुषुम्णां श्वेतवर्णां ध्यायेत्, य एवं वेदानाहतसिद्धिदो भवति । तालुचक्रं तत्रामृतधाराप्रवाहः, घण्टालिङ्गमूलचक्ररन्ध्रे राजदण्डावलम्बिनी विवरं दशमद्वारं तत्र शून्यं ध्यायेत्, चित्तलयो भवति । सप्तमं भ्रू-चक्रमङ्गुष्ठमात्रं, तत्र ज्ञाननेत्रं दीपशिखाकारं ध्यायेत्, तदेव पालकदं वाक्सिद्धिदं भवति । आज्ञाचक्रमष्टमं ब्रह्मरन्ध्रनिर्वाणचक्रं तत्र सूचिकागृहेतरं धूम्रशिखाकारं ध्यायेत् । तत्र जालन्धरपीठं मोक्षप्रदं भवति ।

परं ब्रह्मचक्रं नवममाकाशचक्रं, तत्र षोडशदलपद्ममूर्द्ध्वमुखं तन्मध्यकर्णिकां

---

1. 'नतिस्थं सूर्यविश्वाभं' ? A. 2. 'विद्याभं' C. 3. 'शिखासमम्' C. 4. 'समम्' C. 5. '-प्रभम्' C. 6. 'चन्द्रविचक्र' A. 7. 'हन्मध्ये' C.

[ नवचक्रभेदेन नवलक्षजपे सिद्धिः ]

नवस्थान[1]स्थितं लक्षं नवलक्षं तदुच्यते ।
नव स्थानानि मन्त्रेण क्रमात् संभिद्य कुण्डलीम् ॥१२२॥
विसर्गस्थामृतं पीत्वा पुनराधारमाविशेत् ।
स्थानात् स्थानगतं मन्त्रं स्मरेदेवं क्रमेण तु ।
मन्दभाग्योऽपि नियतं सिध्यते नात्र संशयः ॥ १२३ ॥

[ प्रकारान्तरेण जपसिद्धिः ]

अथवाधार[2]पद्मे तु लिङ्गं वा पश्चिमामुखम् ।
[3]ज्योतीरूपाञ्च योगिन्यं स्वयम्भूवाचकं परम् ॥ १२४ ॥
हृदि त्रिकोणमध्ये वा बाणलिङ्गं तथाकृतिम् ।
मूर्ध्नि त्रिकोणमध्ये तु उत्तरं पश्चिमामुखम् ॥ १२५ ॥
तत्र स्थित्वा जपेल्लक्षं यत्र कुत्र समाहितः ।
ततो [4]भगवती विद्या त्रैलोक्यवशकारिणी ॥ १२६ ॥

[ मालासंस्कारकथनम् ]

अथ वक्ष्यामि मालायाः [5]संस्कारं सर्वसिद्धिदम् ॥१२७॥

[ अप्रतिष्ठितमालया मन्त्रजपनिन्दा ]

अप्रतिष्ठितमालाभिर्मन्त्रं जपति यो नरः ।
सर्वं [6]तन्निष्फलं विद्यात् क्रुद्धा भवति चण्डिका ॥१२८॥

[ मालासूत्रनिर्माणम् ]

कान्तया रचिता सा तु द्रुतं सिद्धिकरी स्मृता ।
ऊर्द्ध्वन्तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम् ॥ १२९ ॥

---

त्रिकूटाकारां तन्मध्ये ऊर्द्ध्वशक्तिकां पश्यन् ध्यायेत्, तत्रैव पूर्णगिरिपीठे सर्वेच्छासिद्धिसाधनं भवति ।" इति । यद्यप्यत्र पूर्णानन्दमततः क्वचित् किञ्चिद् वैषम्यं दृश्यते तथापि मूलमेकमेवेति काममुपन्यस्तम् ।

---

1. 'नवस्थावस्थितं' A., 'गतं' C. 2. 'मध्ये तु' A. 3. 'ज्योतीरूपाञ्चे'त्यादिपादषट्कं नास्ति A-B. 4. 'भवति विद्येयं' C. 5. 'संस्कारैः' C. 6. 'तद्विफलं विन्द्यात्' C.

पुण्यस्त्रीरचितं सूत्रं कार्पासं पट्ट[1]मेव वा ।
[2]मूलास्त्रञ्च पठन् सूत्रं बीजं प्रक्षालयेत्ततः ॥ १३० ॥

[ मालायां ग्रन्थिकरणम् ]

एकैकमालामादाय ब्रह्मग्रन्थिं प्रकल्पयेत् ।
ग्रन्थिहीनं न कर्त्तव्यं स्पृष्टास्पृष्टे न दुष्यति ॥ १३१ ॥

[ शैवादौ ग्रन्थ्यभावे दोषाभावः ]

शैवे च वैष्णवे सौरे गाणेशे श्रीकरेऽपि च ।
[3]बीजकल्पान् पुनः कुर्यात्तत्र नास्ति विचारणा ॥१३२॥

[ ग्रन्थिहीने दोषाभावो देवीविशेषे ]

या देव्यो ग्रन्थिहीनाः स्युर्लिख्यते तदशेषतः ॥ १३३ ॥
[4]कालिकात्वरितायाश्च शक्राद्याः षट्कभेदतः ।
[5]तेनाचरणवासिन्यो वाराह्याश्च [6]प्रपूजयेत् ॥ १३४ ॥

[ मालाशोधने क्रियाविशेषः ]

अनुलोमविलोमाभ्यां मातृकाऽन्तरितं न्यसेत् ।

[ मालायाः पञ्चगव्येन शोधनम् ]

पञ्चगव्ये क्षिपेन्मालां शिवमन्त्रेण मन्त्रिताम् ॥ १३५ ॥

[ मालायां गन्धादिदानम् ]

सद्योजातेन गन्धाद्यैर्वामदेवेन घर्षयेत् ।
धूपयेत्तामघोरेण लेपयेत् पुरुषेण तु ॥ १३६ ॥
[7]मन्त्रयेत् पञ्चमेनैव प्रत्येकन्तु शतं शतम् ।

[ मन्त्रकथनम् ]

[8]मेरुञ्च पञ्चमेनैव मन्त्रेणानेन मन्त्रयेत् ॥ १३७ ॥

---

1. 'सम्भवं' C. 2. 'शूलास्त्रञ्च' A. 3. 'बीजस्पर्शं' C. 4. कालिकात्वरिताया-श्चेत्यादिपादद्वयी नास्ति A. 5. 'तोडलावनवासिन्यो' C. 6. 'प्रयोजयेत्' A. 7. 'लेपयेत्' A-B. 8. 'मेरुस्तु' C.

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।
भवे भवेऽनादिभवे [1]भवोद्भवाय वै नमः ॥ १३८ ॥(१)
ॐ वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः
कालाय नमः कालविकरणाय नमो बलाय नमो
बलप्रमथनाय नमः सर्वभूतदमनाय नमः
[2]( ॐ नमो ) (मनो)न्मथनाय नमः ॥ १३९ ॥(२)
ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वतः सर्वसर्वेभ्यो [3]नमस्तेऽस्तु रुद्ररूपेभ्यः ॥१४०॥(३)
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि
तन्नो रुद्रः प्रचोदयात् ॥ १४१ ॥(४)
ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां
( ब्रह्माधिपतिर्ब्रह्मणोऽधिपति[4]र्ब्रह्मा )
शिवो मेऽस्तु सदाशिवोम् ॥ १४२ ॥(५)

[ शक्तिविषये मन्त्राभावमतनिरासः ]

इति पञ्चर्चा शुद्धिर्न शक्तिविषये [5]तथा ।
तन्त्र [6]समीहितं मुण्डमालायां संस्मृता यतः ॥ १४३ ॥

[ मालास्थापनम् ]

ततः संजपितां मालां स्थापयेद्धेमपात्रके ।
पद्माकारेऽश्वत्थपत्रनवके स्थापयेच्च वा ॥ १४४ ॥

[ मालायाः पञ्चामृतादिना स्नापनादि ]

पञ्चामृतेन सुस्नाप्य शीतलेन जलेन च ।
महाप्रेतासनं बीजं [7]न्यसेत्तत्र च साधकः ॥ १४५ ॥

---

1. 'भजस्व मां भवोद्भवाय' C. 2. 'ममोन्मननाय' C. 3. 'नमोऽस्तु रुद्र' C. 4. 'पतिः शिवो मेऽस्तु' C. 5. 'मता' C. 6. 'सन्निहितं' A. 7. 'विन्यसेत् तत्र साधकः' C.

तत्र देवीं [1]सुपूज्यैव परिवारगणैः सह ।
विधिवदग्निमारोप्य घृतेन शक्तितो हुनेत् ॥ १४६ ॥
होमकर्मण्यशक्तश्चेद् द्विगुणं जपमाचरेत् ।
अष्टोत्तरशतं जप्त्वा गुरुर्मालां [2]समाचरेत् ॥ १४७ ॥
शिष्यहस्ते ततः सोऽपि प्रजप्याष्टोत्तरं शतम् ।
गुरवे दक्षिणां दद्याद् यथाविभवपूर्वकम् ॥ १४८ ॥

[ मालायाः स्वयं संस्कारकालः ]

गुरोरभावे मालायाः संस्कारं स्वयमाचरेत् ।

[ प्रत्यहं पूजान्ते मालाजपः ]

अभ्युदयादौ जपेन्मालां पूजान्तेऽपि तथैव च ॥ १४९ ॥

[ मालापूजायां मन्त्रविशेषः ]

वाग्भवं भुवनेशानी अक्षमालाञ्च ङेयुताम् ।
हृन्मन्त्रञ्च समुच्चार्य पूजयेत् साधकोत्तमः ॥ १५० ॥

[ मालाप्रार्थनमन्त्रः ]

ॐ माले माले महामाले सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥१५१॥

[ मालाऽभिमन्त्रणम् ]

अभिमन्त्र्य ततो मालां गृहीत्वा दक्षिणे करे ।
मायां सिद्धेश्वरीं ङेन्तां हृदयान्तो मनुः स्मृतः ॥१५२॥

---

१५० । वाग्भवमित्यादि । एतेन "ऐँ ह्रीँ अक्षमालायै नमः" इति मन्त्रो भवति ।

१५२ । अभिमन्त्र्येति । एतेन "ह्रीँ सिद्धेश्वर्यै नमः" इति मन्त्रः सिध्यति ।

---

1, 'प्रपूज्यैव' C. 2. समर्पयेत्

[ आद्यन्तयोर्मन्त्रजपः ]

एष पञ्चाक्षरो मन्त्रो ग्रहणे च जपान्तिके ।
हृत्प्रदेशे समानीय न तु वामेन संस्पृशेत् ॥ १५३ ॥

[ मालाजपे अङ्गुलिनियमः ]

मध्यमाया मध्यभागे स्थापयित्वा समाहितः ।
तर्ज्जन्या न स्पृशेन्मालामङ्गुष्ठाग्रेण चालयेत् ॥ १५४ ॥
[1]प्रत्येकं बीजमादाय मेरुञ्चापि न लङ्घयेत् ।
अङ्गुष्ठानामिकाभ्यान्तु जपेदुत्तमकर्म्मणि ।
तर्ज्जन्यङ्गुष्ठयोगेन विद्वेषोच्चाटने जपः ॥ १५५ ॥
कनिष्ठाङ्गुष्ठयोगेन जपेन्मारणकर्म्मणि ।

[ जपान्ते मालास्थापनम् ]

जपान्ते मस्तके मालां क्षिप्त्वाऽनेन समर्च्चयेत् ॥ १५६ ॥
त्वं माले सर्वदेवानां [2]प्रीतिदाशु सदा मम ।
शिवं कुरुष्व मे भद्रे यशो वीर्यञ्च सर्वदा ॥ १५७ ॥

[ मालायाः संगोपनम् ]

जपान्तकाले तां मालां गोपयेत् प्रयतः सुधीः ।
जपकाले[3]ऽपि गोप्तव्या जपमाला सुशोभना ॥ १५८ ॥

[ संख्यां विना जपनिषेधः ]

गणनाविधिमुल्लङ्घ्य यो जपेत्तज्जपं पुनः ।
गृह्णन्ति राक्षसास्तेन गणयेत् सर्वथा बुधः ॥ १५९ ॥

---

१५७ । त्वं माले इति । अयं मन्त्रस्तु तन्त्रान्तरे—

त्वं माले सर्वदेवानां सर्वसिद्धिप्रदा मता ।
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ॥ इति ।

१५९ । गणनेति । गणनस्यावश्यकत्वमुक्तम् । प्रमाणमिदं तन्त्रसारेऽपि । अन्यच्च तन्त्रसारधृत विश्वसारे—

---

1. 'प्रत्येक'मित्यादि-पादद्वयी नास्ति B. 2. 'सिद्धिदा शुभदा च मे' C. 3. 'तु' C.

[ मालायाः पुनः सूत्रग्रन्थनकालः ]

जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् ।

[ मालायाः करभ्रंशादिदोषे कर्त्तव्योपदेशः ]

कराद् भ्रष्टे शब्दकृते जपेदष्टोत्तरं शतम् ॥ १६० ॥

निषिद्धस्पर्शने तद्वज्जपेत् प्रक्षाल्य मन्त्रवित् ॥ १६१ ॥

[ प्रकारान्तरेण मन्त्रसिद्धिकथनम् ]

[1]अथान्यत् संप्रवक्ष्यामि मन्त्रसिद्धिकरं परम् ।

[ मन्त्र-साधकयोरैक्यकथनम् ]

मन्त्रसाधनयोरैक्यं दुर्लभं भुवि मानवैः ॥ १६२ ॥

उक्तं सङ्कर्षणे [2]तन्त्रे शिवेनाखिलवेदिना ।

आनन्दाख्ये पञ्चरात्रे शुक्राय कवये पुरा ॥ १६३ ॥

[ शिष्यमन्त्रयोरैक्यकथनम् ]

[3]संस्कृतं पूजितं मन्त्रं दत्त्वा शिष्याय देशिकः ।

कुर्यादथ तयोरैक्यं शास्त्रदृष्टेन वर्त्मना ॥ १६४ ॥

[ तत्र नियमविशेषः ]

मन्त्रं विदर्भितं कृत्वा नामवर्णैर्यथाक्रमम् ।

आद्यन्ते सकलं नाम ततः प्रणवमालिखेत् ॥ १६५ ॥

---

जपसंख्या तु कर्तव्या नासंख्यातं जपेत् सुधीः ।
असंख्याकारकस्यास्य सर्वं भवति निष्फलम् ॥

तन्त्रे—

हृदये हस्तमारोप्य तिर्यक् कृत्वा कराङ्गुलीः ।
आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत् ॥

जपसंख्याधारणे निषिद्धानिषिद्धान्याह—

नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्न च पुष्पकैः ।
न चन्दनैर्मृत्तिकया जपसंख्यास्तु कारयेत् ॥
लाक्षाकुशीदसिन्दूरं गोमयञ्च करीषकम् ।
विलोड्य गुलिकां कृत्वा जपसंख्यास्तु कारयेत् ॥ इति ।

---

1. 'अथ चान्यत् प्रवक्ष्यामि' C. 2. 'चक्रे' A. 3. 'संस्मृतं' A.

[1]स्वराः पात्रेषु संलेख्या ध्यायेत्तानमृतात्मकान् ।
भूर्ज्जे रोचनगन्धाद्यैः पद्ममध्ये सुशोभने ॥ १६६ ॥
[2]मृदा पवित्रयावेष्ट्य तत् पुनः सिक्थकेन तु ।
निःक्षिपेन्मधुरे तत्तु मृन्मये लघु[3]भाजने ॥ १६७ ॥
[4]क्षीरपूर्णे नवे कुम्भे तत् क्षिपेल्लघुभाजनम् ।
धारयेद्देशिकः कुम्भमग्निकुण्डसमीपतः ।
मन्त्रसाधकयोरैक्यसिद्ध्यर्थं जुहुयात्ततः ॥ १६८ ॥
मूलमन्त्रेण मन्त्रज्ञः सहस्रं शतमेव वा ।
कुम्भे सम्पातयेन्मन्त्री मधुराणां त्रयं शुभम् ॥ १६९ ॥
निधाय निःक्षिपेत् कुम्भं शनैस्तं महदम्भसि ।
मन्त्रसाधकयोरैक्यं भवेदेवंक्रमेण तु ॥ १७० ॥

[ देशिकस्यैतज्ज्ञानाभावे निन्दा ]

एतद् यो न विजानाति [5]नासौ देशिक उच्यते ॥१७१॥

[ यत्र कुत्र रहस्यं न वक्तव्यम् ]

रहस्यं कथितश्चैव न वदेद् यस्य कस्यचित् ।
उत्तमाय स्वशिष्याय प्रियपुत्राय वा वदेत् ॥ १७२ ॥

[ त्रिमधुरसंज्ञा ]

[6]पयो मधु घृतश्चैव समं त्रिमधुरं स्मृतम् ॥ १७३ ॥

[ रहस्यपुरश्चरणादिकं श्यामारहस्यतो ज्ञातव्यम् ]

रहस्यादि पुरश्चर्या दूतीयागादिकाः क्रियाः ।
[7]श्यामारहस्ये विज्ञेयाः संज्ञायां साधकोत्तमैः ॥१७४॥

---

१७४। रहस्यादीति । श्यामारहस्ये पञ्चमपरिच्छेदे रहस्यपुरश्चरणं ज्ञातव्यम् । दूतीयागविधिश्च श्यामारहस्ये, श्रीक्रमे—

---

1. 'स्वराः' A. 2. 'मुदा' A. 3. 'भोजने' A. 4. 'क्षीरपूर्णे' इत्यादि पादद्वयी नास्ति A. 5. 'सौदेशिक स उच्यते' A. 6. 'प्रायान्मधु' A. 7. 'श्यामारहस्यसंज्ञायां विज्ञेया साधकोत्तमैः' C.

याममात्रगते रात्रौ कुलगेहगतः पुमान् ।
ताम्बूलपूरितमुखो धूपामोदसुगन्धिभिः ॥
रक्तचन्दनलिप्ताङ्गो रक्तमाल्यानुलेपितः ।
रक्तवस्त्रपरीधानो लाक्षारुणगृहे स्थितः ।
रक्तमाल्येन संवीतो रक्तपुष्पविभूषितः ॥
पञ्चीकरणसंकेतैः पूजयेत् कुलनायिकाम् ॥

कुलनायिकालक्षणमुक्तं तत्रैव—

नटी कापालिनी वेश्या पुक्कसी नापिताङ्गना ।
रजकी रञ्जकी चैव सैरिन्ध्री च सुभाषिणी ॥
खटिका घटिका चैव तथा गोपालकन्यका ।
विशेषवैदग्ध्ययुताः सर्वा एव कुलाङ्गनाः ॥
गुरुभक्ता देवभक्ता घृणालज्जाविवर्जिताः ।
सङ्गोपनरताः प्रायस्तरुण्यः सर्वसिद्धिदाः ॥

एवं यथोदितां प्रसूनतूलिकोपरि संस्थाप्य पूजामारभेत् ॥

तदुक्तं तत्रैव—

अद्वैताचारसम्पन्नां घृणालज्जाविवर्जिताम् ।
सदनुष्ठाननिरतां सात्त्विकीं भक्तिसंयुताम् ॥
देवताभावसंयुक्तां गुरुभक्तां दृढव्रताम् ।
ईर्ष्यालस्येन रहितां सदयां भक्तवत्सलाम् ॥
चातुर्यौदार्यदाक्षिण्यकरुणादिगुणान्विताम् ।
रूपयौवनसम्पन्नां शीलसौभाग्यशालिनीम् ॥
सदा परिगृहीतां वा यद्वा सङ्केतमागताम् ।
अथवा तत्क्षणायातां मदनानलतापिताम् ॥
विलिप्तां रक्तगन्धेन रक्ताम्बरविभूषिताम् ।
सुगन्धिकुसुमाबद्धां सर्वाभरणभूषिताम् ॥
सुधूपधूपितां तन्वीं दूतीकर्मणि योजयेत् ।
एवम्भूतां यजेत् ताञ्च प्रसूनतूलिकोपरि ॥

इत्यादि । नवमपरिच्छेदे श्यामारहस्ये विशेषेणोल्लिखितो वर्तते इति तत्रैवानुसन्धेयः । विस्तरभयान्न साकल्येन लिखितमिति ।

[ बलिदानकथनम् ]

अथातो बलिदानन्तु वक्ष्यामि श्री-प्रियङ्करम् ।
प्रणवं पूर्वमुद्धृत्य पद्मे युग्मं पठेत्ततः ॥ १७५ ॥

महापद्मे पदं ब्रूयात् पद्मावति पदं ततः ।
वह्निजायावधिः पश्चाद् बलिं दद्याच्चतुष्पथे ॥ १७६ ॥

प्रणवं भुवनेशानीमेकजटे पदं ततः ।
[1]महायक्ष्माधिपं ब्रूयात्ता[2]रय-पदं समुच्चरेत् ॥ १७७ ॥

ममोपनीतकं ब्रूयाद् बलिं गृह्ण द्विधा पदम् ।
[3]गृह्णापय युगं मम सर्वशान्तिं कुरुद्वयम् ॥ १७८ ॥

परविद्यां द्विधा[4]कृत्य त्रुट-द्वन्द्वञ्च छिन्धियुक् ।
[5]मायाबीजं ततो हुञ्च बलिं दद्यान्महानिशि ॥ १७९ ॥

बलिमन्त्रद्वयं प्रोक्तं वीराणां सिद्धिकाम्यया ॥ १८० ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्री-तत्त्वचिन्तामणौ
विंशतितमः प्रकाशः ॥ २० ॥

---

१७५-७६ । बलिदानमन्त्रस्तु—"ॐ पद्मे पद्मे महापद्मे पद्मावति स्वाहा" इति । अनेन चतुष्पथे बलिं दद्यात् ।

१७७—८० । प्रणवमित्यादि । द्वितीयमन्त्रस्तु—"ॐ ह्रीँ एकजटे महायक्ष्माधिपं तारय, ममोपनीतं बलिं गृह्ण गृह्ण, गृह्णापय गृह्णापय, मम सर्वशान्तिं कुरु कुरु, परविद्यामाकृष्याकृष्य त्रुट त्रुट, छिन्धि छिन्धि ह्रीँ हुँ ।" इति । वीराचारिणां सिद्ध्यर्थं बलिमन्त्रद्वयमत्र कथितमिति ।

---

1. 'यज्ञाधिपं' A. 2. 'तारे-पदं' A. 3. 'गृह्णपदयुगं' A. 4. '-ऽऽकृष्य' A. 5. 'रमाबीजं' A.

# एकविंशतितमः प्रकाशः

———:०*०:———

[ ब्रह्महत्यादिप्रायश्चित्तकथनम् ]

ब्रह्महत्यादिदोषाणां प्रायश्चित्तं वदाम्यथ ॥ १ ॥

[ तत्र क्रमः ]

रक्तपुष्पैर्यजेच्चक्रं समस्त[1]रश्मि संयुतम् ।
[2]कुलाचारक्रमेणैव कर्पूरक्षोदमण्डितम् ॥ २ ॥

[ तत्र कालनियमः ]

मास[3]त्रयेण नियतं महापातककोटयः ।
जन्मान्तरकृताः सर्वे क्षणान्नाशं प्रयान्ति च ।
लक्ष्मीस्तस्य गृहे वश्या सुस्थिरा सर्वकामदा ॥३॥

[ जवापुष्पेन पूजाप्रशंसा ]

जवापुष्पैश्च मन्त्रज्ञः पूर्ववत् पूजयेच्छिवाम् ।
ब्रह्महत्यादिपापानि पूर्वजन्मकृतान्यपि ।
नाशयेन्नात्र सन्देहो धनवान् जायते नरः ॥ ४ ॥

[ सुगन्धिकुसुमैः पूजाफलम् ]

शिवां संपूजयेन्नित्यं सुगन्धिकुसुमैरपि ।
महापातकयुक्तात्मा तत्क्षणात् पापहा भवेत् ॥ ५ ॥

[ शम्यादिभिः पूजाफलम् ]

शमीदूर्वाङ्कुराश्वत्थ-पल्लवैरथ साधकः ।
मासेन हन्ति कलुषं सप्तजन्मनि [4]यत् कृतम् ॥ ६ ॥

---

1. '-वायु-' A, 2. 'कुलाचारे'त्यादि-पादद्वयी नास्ति A, 3. '-मात्रेण' C, 4. 'तत्' C,

[ केतकीपत्रैः पूजाफलम् ]

केतकीतरुणैः पत्रैः पूर्ववत् पूजयेद् यदि ।
उपपातकसङ्घांश्च नाशयेन्नात्र संशयः ।
सौभाग्यमतुलं तस्य जायते परमाद्भुतम् ॥ ७ ॥

[ शतपत्रैः पूजाफलम् ]

पूजना[1]च्छतपत्रैश्च[2] सर्वपापं विनाशयेत् ।

[ श्वेतपद्मैः पूजाफलम् ]

पूर्वजन्मकृतं पापं [3]श्वेतपद्मैः प्रपूजनात् ॥ ८ ॥
[4]कुलाचारक्रमेणैव भवेत् सौभाग्यवल्लभः ।
विंशजन्मकृतं पापं श्वेतपद्मैः प्रपूजयेत् ।
मासमात्रेण सकुलं मोक्षस्तस्य करे स्थितः ॥ ९ ॥

[ बन्धूककुसुमैः पूजाफलम् ]

बन्धूककुसुमैः शुद्धैः सर्ववत् पूजयेद् यदि ।
त्रैलोक्यं वशगं तस्य सर्वपापं हरेद् ध्रुवम् ॥ १० ॥

[ बिल्वपत्रैः पद्मैश्च पूजाफलम् ]

बिल्वपत्रैश्च जलजैः सहैव परिपूजनात् ।
समृद्धिमान् भवेत्तद्वत् सर्वपापहरः स्वयम् ॥ ११ ॥

[ मल्लिकादिपुष्पैः पूजाफलम् ]

मल्लिका-मालती-जाती-कुन्दैश्च शतपत्रकैः ।
श्वेतोत्पलैश्च संशुद्धैः पूजयेन्मासमात्रकम् ॥ १२ ॥
[5]विंशजन्मकृतं पापं चम्पकैः पूजनादपि ।
कुलाचारक्रमेणैव पातकं शतजन्मजम् ॥ १३ ॥

---

1. '-च्छे-' A. 2. '-स्तु' C. 3. 'चम्पकैः पूजनादपि' C. 4. 'कुलाचारे'त्यादि द्वादश पादा न सन्ति A. 5. 'विंशे'त्यादिपादद्वयं नास्ति C.

ब्रह्महत्यादिजनितं नाशयेन्नात्र संशयः ।
मुक्तिस्तस्य करे नूनं वाचा जीवसमो भुवि ॥ १४ ॥

[ अगस्त्यादिपुष्पः पूजनफलम् ]

अगस्त्य-[1]बाणा-बन्धूक-जवा-रक्तोत्पलैरपि ।
पातकं नाशयेत्तद्वत् साक्षात् कामसमो भवेत् ॥ १५ ॥

[ चम्पकादिपुष्पैः पूजनफलम् ]

चम्पकैः पाटलैश्चैव वकुलैर्नागकेशरैः ।
कह्लारैः सिन्धु[2]वारैश्च पूजयेद् यदि साधकः ।
सौभाग्यमतुलं तस्य मासमात्रेण वै भवेत् ॥ १६ ॥

[ रत्नपूजाविधानकथनम् ]

रत्नपूजाविधानन्तु कथयामि [3]विशेषतः ॥ १७ ॥
पुष्पाणि रचयेन्मन्त्री माणिक्यघटितानि च ।
तैस्तु पूजा [4]प्रकर्त्तव्या चक्रराजस्य पूर्ववत् ।
नानापुष्पैः सुगन्धैश्च [5]कर्पूरक्षोदचर्चितैः ॥ १८ ॥

[ रत्नपुष्पादिभिः पूजाफलम् ]

[6]एकविंशतिरात्रेण विंशतिर्धरणीभुजाम् ।
दासभूता भवत्येव महारोगांश्च नाशयेत् ॥ १९ ॥
सूर्यवत् कान्तिमान् मन्त्री जायते नात्र संशयः ॥२०॥

---

१५-१६ । अगस्त्येति । अगस्त्यं वकपुष्पं, बाणा नीलझिण्टी, "नीला झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा" ॥ इत्यमरः ।

बन्धूकः बन्धुजीवकः, ( 'दुपहरिया' इति ख्यातः ) 'बन्धूको बन्धुजीवकः' इत्यमरः । पाटलं पाटलायाः पुष्पम् ( 'गोलाबा'ख्यं पुष्पमिति केचित् ) ।

---

1. '-याग-' A. 2. '-वार्कैश्च' A. 3. 'समासतः' C. 4. 'विधातव्या' C. 5. 'कर्पूरं क्षोदमण्डितम्' B. 6. 'एकविंशती'त्यादि पाददशकं नास्ति A.

मुक्तारत्नैरङ्कितानि स्वर्णपुष्पाणि यानि च ।
तैस्तु पूजा प्रकर्तव्या नानारत्नैस्तु पूर्ववत् ॥ २१ ॥
एकविंशतिरात्रेण राजपत्न्यो वशानुगाः ।
[1]कलाकान्तियुतो मन्त्री जायते शुभगः क्षितौ ॥२२॥

[ प्रवालपुष्पैः स्वर्णपुष्पैश्च पूजाफलम् ]

प्रवाल[2]रचितैः स्वर्णैः पुष्पैश्च बहुभिर्यजेत् ।
अन्यैर्नानाविधैः पुष्पैः सप्ताहं कुलवर्त्मना ॥ २३ ॥
क्रूरास्तस्य वशाः सर्वे वैरिवर्गान् विनाशयेत् ।

[ मरकतपुष्पैः पूजाफलम् ]

तथा मरकतक्षिप्तै[3]र्वरी मित्रं ध्रुवं भवेत् ॥ २४ ॥

[ पद्मरागपुष्पैः पूजाफलम् ]

पद्मरागमहारत्ननिर्मितैः स्वर्णसंयुतैः ।
कुसुमैः पूजयेच्चक्रं त्रिसप्ताहं क्रमेण तु ।
सुरास्तस्य वशाः सर्वे बृहस्पतिसमो भवेत् ॥ २५ ॥

[ हीरकयुक्तस्वर्णपुष्पैः पूजाफलम् ]

सुवर्णरचितैः पुष्पै[4]र्वज्र-केतक[5]वासितैः ।
एकविंशतिरात्रेण मोहयेज्जगतीमिमाम् ॥ २६ ॥
[6]देवा दैत्या वशास्तस्य जायन्ते नात्र संशयः ॥२७॥

[ नीलकान्तमणियुक्तस्वर्णपुष्पैः पूजाफलम् ]

इन्द्रनीलमयैः स्वर्णपुष्पैश्चक्रं प्रपूजयेत् ।

---

1. 'कलान्तको' ? A, 'कालान्तिको' B. 2. '-घटितैः' C. 3. 'क्षिप्तं वैरिमात्रं' A. 4. 'रजः' A. 5. '-राजितैः' C. 6. 'देवदैत्या' A.

एकविंशति[1]रात्रैश्च तथा नीलैश्च नीरजैः ।
वैरिणो नाशमायान्ति [2]शेषा वश्या भवन्ति च ॥२८॥

[ गोमेदयुक्तस्वर्णपुष्पैः पूजाफलम् ]

गोमेदघटितैः स्वर्णपुष्पैः कुन्दैश्च किंशुकैः ।
सप्ताहाद् वैरिणो वश्या [3]घातस्तेषु प्रजायते ।
त्रिसप्ताहान्महापापसञ्चयं नाशयेद् ध्रुवम् ॥ २९ ॥

[ नूतनस्वर्णरत्नमयपुष्पैः पूजाफलम् ]

स्वर्णरत्नमयैः पुष्पैर्नवैश्चापि प्रपूजयेत् ।
तदाऽश्वमेधदशकं फलं भवति निश्चितम् ॥ ३० ॥
क्रव्याद[4]जीवा वश्या हि भवन्त्येव न संशयः ।

[ वैदूर्ययुक्तस्वर्णपुष्पैः पूजाफलम् ]

वैदूर्यघटितैः स्वर्णपुष्पैश्चम्पकजातिभिः ।
चक्रराजं समभ्यर्च्च्य त्रैलोक्यं [5]स्तम्भयेत् क्षणात् ॥३१॥
एकविंशतिभिर्वारैर्महापापहरो भवेत् ॥ ३२ ॥

[ नानारत्नयुक्तस्वर्णपुष्पैः पूजाफलम् ]

नानारत्नमयैः स्वर्णपुष्पैर्यदि शिवां यजेत् ।
तदा देवाश्च मुनयः पन्नगा राक्षसादयः ॥ ३३ ॥
सर्वे वश्या भवन्त्येव त्रिसप्ताहान्न संशयः ।
जन्मकोटिभवं पापं साधकस्य विनाशयेत् ॥ ३४ ॥

[ स्वल्पस्वर्णरत्नादियुक्तपुष्पैः पूजाफलम् ]

स्वर्णरत्नादिपूर्णत्वं यदि न स्यात्तथा पुनः ।
[6]तैरेव पुष्पैः पूजा हि कर्त्तव्या साधकोत्तमैः ॥३५॥

---

1. '-रात्रेण' C. 2. 'येशाः' ? A. 3. 'घातस्तस्य' ? C. 4. 'क्रव्यादबीजवश्यानि' A. 5. 'वशमानयेत्' C. 6. 'भैरवाख्यपुष्पैः पूजा कर्त्तव्या साधकोत्तमैः' A-B.

अलङ्कारस्वरूपेण पूजयेच्चक्रनायिकाम् ।
केवलं यैस्तु पुष्पैस्तु त्रैलोक्यं स्तम्भयेत् खलु ॥३६॥
मासमात्रेण पापानि सप्तजन्मभवानि च ।
नाशये[1]न्मोहयेत् सर्वं समुद्रवलयां धराम् ॥ ३७ ॥

[ पर्युषितपुष्पैः पूजननिषेधः ]

पुष्पैः पर्युषितैश्चैव नार्चयेत् स्वर्णजैरपि ।

[ निर्माल्यादिपुष्पैः पूजननिषेधः ]

निर्माल्यभूतैः कुसुमैरुच्छिष्टैरपि नार्चयेत् ॥ ३८ ॥

[ अपामार्गादिदलैः पूजनफलम् ]

अपामार्गदलैर्भृङ्गैर्बिल्वैर्मरकतैरपि ।
पत्रैरेभिः प्रयत्नेन पूजयेत् परमेश्वरीम् ॥ ३९ ॥

[ शाक्तपुष्पकथनम् ]

अम्भोजोत्पल-बन्धुजीव-विजया-पुन्नाग-नागान्यथो
जाती-कुन्द-कुरण्ट-चम्पक-जवा-यूथी-रमा-पाटलैः ।
बिल्वाशोक-हयारि-कुब्ज-मदनैर्मन्दार-दूर्वाङ्कुरै-
[2]द्रोणागस्त्यपराजितानि कुसुमान्युक्तानि
शाक्तान्यलम् ॥ ४० ॥

[ मल्लिकातगरादिभिः पूजा कर्तव्या ]

[3]सर्वकालोद्भवैः पुष्पैर्मल्लिका-तगरादिभिः ।
सितरक्तैः प्रयत्नेन पूजयेत् परमेश्वरीम् ॥ ४१ ॥

---

४०। अम्भोजोत्पलेति। विजया शेफालिका, पुन्नागं केशर-पुष्पम्, नागं नागकेशरपुष्पम्, कुरण्टं रक्तझिण्टीपुष्पम्, हयारि करवीरपुष्पम्, कुब्जम् अपामार्ग-फलम्, मदनं वकुलपुष्पम्, ('मयना' इति ख्यातं वा); मन्दारम् अर्कपुष्पम्, ('आकन्द' इति ख्यातम्)।

---

1. '-न्द्रोमयेत्' A. 2. '-र्बाणागस्त्य' C. 3. 'ऋतु-' C.

[ कलिकाभिः पूजानिषेधः ]

कलिकाभिस्तथा [1]नेष्टं विना चम्पकपङ्कजैः ।

[ जलजचम्पकयोः पर्युषितदोषाभावः ]

न पर्युषितदोषोऽस्ति जलजे चम्पकेऽपि च ॥ ४२ ॥

[ यन्त्रपुष्पकथनम् ]

यत्रापराजितापुष्पं पुष्पं जवाख्यमुत्तमम् ।
करवीरे [2]शुक्लरक्ते [3]द्रोणपुष्पञ्च एव हि ॥ ४३ ॥
[4]एषु देवी वसेन्नित्यं तद्यन्त्रे तां प्रपूजयेत् ।
[5]अतः प्रयत्नतो मन्त्री पुष्पैरेभिः समर्चयेत् ॥ ४४ ॥

योगिनीतन्त्रे त्रिपुराप्रकरणे—

[ पुष्पविशेषे केचन विधिनिषेधाः ]

शेफालिकान्तु कह्लारं शरत्कालं विना त्यजेत् ॥ ४५ ॥
बकुलस्य त्वशोकस्य [6]अर्जुनस्य महेश्वरि ।
पूजयेद् वृन्तवर्ज्जेन सवृन्तेन विवर्जयेत् ॥ ४६ ॥
विष्णुक्रान्ता जवा नागकेशरं नागवल्लभम् ।
बन्धूकञ्चैव [7]कह्लारं सवृन्तेन समर्च्चयेत् ॥ ४७ ॥
न स्पृशेद् वृन्तवर्जञ्च भूमिष्ठञ्च न संस्पृशेत् ।
शेफालि वकुलञ्चैव भूगतेन [8]समाचरेत् ॥ ४८ ॥
पुष्पञ्चाक्षतसंयुक्तं [9]तथा रक्तविलेपितम् ।
सर्वान्ते सुन्दरीं न्यस्य [10]रक्तपुष्पं तथा न्यसेत् ॥४९॥

---

1. 'नित्यं' C. 2. 'रक्तशुक्ले' C. 3. 'स्याद् द्रोणं पुष्पमेव च' C. 4. 'तत्र' A-C. 5. 'अत' इत्यादिपादद्वयी नास्ति A-B. 6. 'चार्ज्जुनस्य' C 7. 'मन्दारं' C. 8. 'समर्चयेत्' C. 9. 'रक्तगन्धविलेपितम्' C. 10. 'वक्त्र-' C.

[ विल्वपत्रस्य प्राशस्त्यम् ]

पत्रेषु विल्वपत्राणि दत्त्वा देव्यै प्रयत्नतः ।
विल्वपत्रैर्विना पूजा शाक्ते शैवे न दृश्यते ॥ ५० ॥

[ अङ्गरङ्गेषु सिन्दूरस्य प्रशस्तता ]

अङ्ग[1]रङ्गेषु सिन्दूरं देव्याः प्रीतिकरं परम् ।
अतः प्रयत्नतो मन्त्री सिन्दूरं विनिवेदयेत् ।

[ मुखवासेषु ताम्बूलस्य प्रशस्तता ]

मुख[2]वासेषु ताम्बूलं देव्यानन्दकरं [3]परम् ॥ ५१ ॥
एवमेव विधानेन पूजयेद् यदि पार्वतीम् ।
अभीष्टं सप्तरात्रेण लभते नात्र संशयः ॥ ५२ ॥

[ वारविशेषे पुष्पविशेषप्राशस्त्यम् ]

रविवारेऽरुणाम्भोजैः [4]कुमुदैः सोमवासरे ।
भौमे रक्तोत्पलैः सौम्यवारे तगरसम्भवैः ॥ ५३ ॥
गुरुवारे च कह्लारैः शुक्रवारे सिताम्बुजैः ।
उत्पलैः शनिवारे च पूजये[5]दब्दमादरात् ॥ ५४ ॥

[ वारविशेषे निवेदनीयद्रव्याणि ]

निवेदयेत् क्रमात्तेषु रविवारादिसप्तसु ।
पायसं दुग्ध-कदली-नवनीतं सिता-घृतम् ॥ ५५ ॥

[ वर्षमात्रदेवीपूजनफलम् ]

एक[6]मब्दं समाराध्य देवीं गन्धादिभिः क्रमात् ।
ग्रहपीडां विजित्याशु सुखानि च समश्नुते ॥ ५६ ॥

---

५५ । निवेदयेदिति । सिता शर्करा ।

---

1. '-रागेषु' C. 2. '-रागेषु' A. 3. 'महत्' A. 4. 'कुसुमैः' C. 5. '-दब्जमा-' C. 6. '-मब्जं समाहृते च' C.

[ पर्वताग्रे देवीपूजनफलम् ]

पर्वताग्रे यजेद्देवीं पलाशकुसुमैर्निशि ।
सिद्धद्रव्यैश्च सप्ताहात् खेचरीमेलनं भवेत् ॥ ५७ ॥

[ अरण्यादिषु पूजाफलम् ]

अरण्ये वटमूले वा कुञ्जे वा धरणीभृताम् ।
कदम्बजातिपुष्पाभ्यां सिद्धद्रव्यैः शिवां यजेत् ।
मासेन सिद्ध[1]डाकिन्यः प्रत्यक्षा वाञ्छितप्रदाः ॥ ५८ ॥

[ समुद्रतीरे पूजाफलम् ]

केतकीकुसुमैः सिद्धाश्चेटका वारिधेस्तटे ।
आज्ञामभीष्टां वनितां [2]काममायां महाद्भुताम् ।
वसूनि [3]मालां भूषाश्च दद्युरस्येच्छया [4]भृशम् ॥ ५९ ॥

[ अक्षद्रुमपीठोपरि देवीपूजाफलम् ]

पीठमक्ष[5]द्रुमैः कृत्वा तत्र देवीं यजेन्निशि ।
शालमलीकुसुमैः सिद्धद्रव्यैर्मासन्तु निर्भयः ॥ ६० ॥

[ श्मशाने पूजनफलम् ]

[6]पितृभूमौ साधकेन्द्रः सिध्यन्त[7]स्य पिशाचिकाः ।

[ वेतालसिद्ध्युपायः ]

निर्जने विपिने रात्रौ मासमात्रन्तु निर्भयः ॥ ६१ ॥
यजेद्देवीं चक्रगतां सिद्धद्रव्य[8]समन्विताम् ।
मालतीजातिपुन्नागकेतकीमधुभिः क्रमात् ॥ ६२ ॥

---

६० । पीठमक्षेति । अक्षद्रुमैः विभीतकवृक्षैः ।

---

1. 'सिद्धो यक्षिण्यः' C. 2. 'कालमायां' C. 3. 'दत्त्वा मालाञ्च दत्त्वा रम्येच्छया' A. 4. '-ऽनिशम्' C. 5. '-क्रमैः' C. 6. 'पितृभूमौ' इत्यादिश्लोकषट्कं नास्ति B. 7. '-स्यादिशाचिका:' A. 8. '-समाहिताम्' A.

तेन सिध्यन्ति वेताला[1]नथ वै स्वेच्छया चरेत् ।

[ मध्यरात्रे स्थानविशेषे देवीपूजाफलम् ]

श्मशाने [2]चण्डिकागेहे निर्जने विपिनेऽथवा ॥ ६३ ॥
[3]मध्यरात्रे यजेद्देवीं कृष्णवस्त्रादिभूषितः ।
[4]कृष्णचक्रेऽतिकृष्णां तामभिवाद्य प्रपूजयेत् ॥ ६४ ॥
[5]साध्ययोनिं तदग्रे तु बलिं छिन्दन्निवेदयेत् ।
सिद्धद्रव्यसमोपेतं [6]मासात्तद्भावलोचनात् ॥ ६५ ॥
जायन्ते [7]भीषणाः कृष्णास्ताभ्यः साध्यं [8]निवेदयेत् ।
[9]विश्वसंहारसन्तुष्टां पुनरेत्य निजेच्छया ॥ ६६ ॥

[ तिरोधानसिद्ध्युपायः ]

देव्या ललाटनेत्रे स्युः प्रार्थ[10]नेन तिरोहिता ॥ ६७ ॥

[ मायासिद्ध्युपायः ]

रक्तभूषाम्बरा[11]नोपमालाभूषितविग्रहः ।
उद्याने निर्जने देवीं चक्रे सञ्चिन्त्य पूजयेत् ॥ ६८ ॥
कह्लारचम्पकाशोकपाटलाशतपत्रकैः ।
सिद्धद्रव्यसमोपेतैर्मायाः सिध्यन्ति [12]मासतः ॥ ६९ ॥

[ कामरूपसिद्ध्युपायः ]

[13]मासं प्रसादलाभेन कामरूपो भवेन्नरः ।
[14]याभिर्विश्वं ययौ विश्वचारी विश्वविनोदवान् ॥७०॥

---

1. '-स्तामनु स्वे-' A. 2. 'रण्डिका-' C. 3. 'मध्ये वायौ' A, 'मध्ये रात्रौ' B. 4. 'वेष्टे चक्रे' C. 5. 'मध्ये योनिं' A. 6. 'मासात्तं भालमोचनात्' C. 7. 'भीषणाकृत्यास्तेभ्यः' C. 8. 'विवेचयेत्' A-B 9. 'विश्वसंसारसन्तुष्टाः' C. 10. '-नेनातिरोहिता' A. 11. '-लेप-' C. 12. 'मानतः' C 13. 'यासां' C. 14. 'याति विश्वं' C.

[ त्रिकालज्ञत्वसिद्ध्युपायः ]

षडाधारार[1]मध्ये तु चक्रं सञ्चिन्त्य पूजयेत् ।
चन्द्रचन्दनकस्तूरीमृगनाभिमदोद्भवैः ।
त्रिकालज्ञो भवेद्देवीं तेषु सम्यग् विचिन्तयेत् ॥७१॥

[ पूगोद्याने देवीपूजाफलम् ]

पूगोद्याने यजेद्देवीं सिद्धद्रव्यैर्दिवानिशम् ।
निवसंस्तत्र तत्पुष्पैर्जायते [2]मन्मथोपमः ॥ ७२ ॥

[ पूर्णासु कन्यकायां देवीपूजाफलम् ]

पूर्णासु [3]नियतं देवीं कन्यकायां समर्च्चयेत् ।
कृत्याः पररिता मन्त्रा विमुखास्तान् ग्रसन्ति वै ॥७३॥

[ मदनारोपणकथनम् ]

मदनारोपणं वक्ष्ये साधकानां हिताय च ।
संवत्सरकृता पूजा येनैव पूर्णता भवेत् ॥ ७४ ॥
शिवस्य मदनः पूर्वं तपोभङ्गनिबन्धनात् ।
भस्माभवत्तदा पत्नी रतिः प्रीतिश्च दुःखिता ॥ ७५ ॥
तन्नेत्रवारिसम्भूता मदनस्य तदा भवेत् ।
तत् सौरभश्च सौभाग्यं महदासीत्तदद्भुतम् ॥ ७६ ॥
तेन सन्तुष्टहृदयाद् वरो दत्तः शिवेन तु ।
रत्यै प्रीत्यै च तस्मात्तु मदनः [4]प्रकृतीकृतः ॥ ७७ ॥
[5]मदनश्चैव यो मन्त्री [6]वर्षमध्ये प्रपूजयेत् ।
तस्य सांवत्सरी पूजा [7]मदनाय भविष्यति ॥ ७८ ॥

---

७१ । षडाधारेति । चन्द्रः कर्पूरः ।

७३ । पूर्णास्विति । पूर्णासु पूर्णिमासु ।

---

1. '-धाराणां' C. 2. 'मन्मथो वरः' C. 3. 'नियमे' B. 4. 'प्रकटीकृतः' A. 5. 'मदनायां जपेन्मन्त्री' B. 6. 'विषमध्ये न पूजयेत्' C. 7. 'सदनाय' B.

इति तस्यै वरो दत्तः शङ्करेण महात्मना ।

[ मदनपूजनस्य कर्तव्यत्वम् ]

तस्मान्मदनपूजा च कर्त्तव्या साधकोत्तमैः ॥ ७९ ॥

समूलमदनं वापि गुच्छैर्वापि प्रपूजयेत् ।

मदनं नवधा कुर्यात् पूजयेत्तदनन्तरम् ॥ ८० ॥

आनन्देश्वरबीजेन नवधा बिन्दुना सह ।

नानाप्रकारसंभिन्नं मदनं पूजयेत् क्रमात् ॥ ८१ ॥

अघोराख्येण मन्त्रेण अभिषिञ्चेत्तमेव हि ।

माया स्फुरद्वयं भूयः प्रस्फुरद्वितयं पुनः ॥ ८२ ॥

घोरघोरतरेभ्यस्तु तवरूपपदं लिखेत् ।

चटद्वयं तदन्तेऽपि प्रकटद्वितयं पुनः ॥ ८३ ॥

कहयुग्म [1]वशयुग्मं बन्ध बन्ध पदं ततः ।

घातय द्वितयं [2]वर्म फडन्तो घोरको मनुः ॥ ८४ ॥

शिव[3]चन्द्रौ मादनान्तं [4]पान्तं वह्निसमन्वितम् ।

शक्तिभिन्नं बिन्दुनादकलाढ्यं वाग्भवं त्विदम् ॥८५॥

---

८१—८४ । आनन्देश्वरेति । आनन्दभैरवमन्त्रस्तु—"हसक्ष मलवरयूँ आनन्दभैरवाय वषट्" इति प्राणतोषणी ।

अघोराख्येण "अघोरेभ्योऽथ घोरेभ्य" इत्यादिना ( द्रष्टव्यं पृ० ७८५ ) ।

मायेत्यादि । मन्त्रोद्धारस्तु—ह्रीँ स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतरेभ्यः तव रूपं चट चट प्रकट प्रकट कह कह वश वश बन्ध बन्ध घातय घातय हुँ फट् ॥ इति ।

---

1. 'वसद्वन्द्वं' C. 2. 'वर्त्म हृदन्तो' A-B. 3. '-चन्द्रयोर्मदना' A. 4. ,पातु वह्निसमाहितं' A.

शिवशक्ती काम[1]शक्रौ वह्निवामाक्षिमण्डितम् ।
बिन्दुनादकलाक्रान्तं कामराजमिदं महत् ॥ ८६ ॥
सदाशिवस्य बीजन्तु दक्षिणा त्वतिभैरवी ।
अनेन शरमन्त्रेण रक्षणं कवचेन तु ॥ ८७ ॥
[2]बद्ध्वा त्रिशूलमुद्रान्तु भ्रामयेन्मदनोपरि ॥ ८८ ॥
अङ्गुष्ठेन कनिष्ठान्तु बद्ध्वा शिष्टाङ्गुलित्रयम् ।
प्रसारयेत् त्रिशूलस्य मुद्रेयं परिकीर्त्तिता ॥ ८९ ॥

[ मदनारोपणकालः ]

चैत्रे मासि चतुर्द्दश्यां मदनारोपणं भवेत् ।

[ मदनारोपणक्रमः ]

उद्धरेदस्त्रमन्त्रेण हृदयेन [3]विलोपयेत् ॥ ९० ॥

---

८५ । शिवचन्द्रावित्यादि । शिवो हकारः, चन्द्रः सकारः, मादनः ककारः, पान्तं फकारः, वह्नीरकारः, शक्तिरेकारः, तेन 'ह स क फ्रेँ' इति मन्त्रो भवति ।

८६ । शिवशक्ती इत्यादि । शिवो हकारः, शक्तिरेकारः, कामः ककारः, शक्रो लकारः, वह्नी-रकारः, वामाक्षिरीकारः, तेन 'ह ए क ल रीँ' इति मन्त्रो भवति ।

| वाग्भव-कूटम् | कामराज-कुटम् | शक्तिकूटम् |
|---|---|---|
| ह | ह | हौँ |
| स | ए | क्रीँ |
| क | क | ह |
| फ्रैँ | ल | स |
| | रीँ | र |
| | | फ |
| | | ट्, |
| | | हूँ |

८७ । सदाशिवस्येति । सदाशिवस्य बीजं 'हौँ', दक्षिणाया बीजं 'क्रीँ;' भैरवी-बीजं 'हसरैँ', शरमण्डः 'फट्', कवचः 'हूँ', तेन 'हौँ क्रीँ हसरैँ फट् हूँ' इति मन्त्रोद्धारो भवति ।

८८-८९ । बद्ध्वेति । अङ्गुष्ठेन कनिष्ठां बद्ध्वा तर्जनीं मध्यमामनामाञ्च प्रसारये-दिति त्रिशूल-मुद्रायाः प्रकारः ।

---

1. '-शक्ती' C. 2. इतः पादाष्टकं A-B-पुस्तकयोर्नास्ति । 3. 'विलेपयेत्' A.

[ तत्र मदनाधिवासः ]

श्रीखण्ड[1]घनमूलाद्यैरधिवासञ्च कारयेत् ।
नित्यपूजां विधायैव निशि संस्थाप्य विद्यया ॥ ६१ ॥
प्रथमे दिवसे कुर्यादधिवासनमुत्तमम् ।
सद्योऽधिवासनं वापि वर्षपूजार्थसिद्धये ॥ ६२ ॥

[ मदनपूजाप्रकरणम् ]

प्रातःकाले चतुर्दश्यां नित्यपूजां समाप्य च ।
नवकोणं विधायाथ सिन्दूरेण महाप्रभम्[2] ॥ ६३ ॥
कलसा[3]ननुसंस्थाप्य हेमरत्नादिपूरितान् ।
[4]एकं वा सकलं रम्यं स्थापयेद्देशिकोत्तमः ॥ ६४ ॥
दक्षिणे मण्डलं कुर्याद[5]ङ्कुराद्यैर्विचित्रितम् ।
अशोकतरुमालिख्य त्रिकोणं मण्डलं लिखेत् ॥ ६५ ॥

[ कामस्य ध्यानम् ]

तन्मध्ये पूजयेत् कामं तरुणञ्चारुणप्रभम् ।
[6]रक्तपुष्पं रक्तवस्त्रं वामदक्षिणयोः क्रमात् ॥ ६६ ॥
रतिप्रीतिविशोभाढ्यं पञ्चबाणधनुर्धरम् ।
वसन्तसहितं कामं पूजयेत् सिद्धिहेतवे ॥ ६७ ॥

[ काममन्त्रः ]

वाग्भवं भुवनेशानीं श्रियं [7]कामात्मकं तथा ।
कामाय नम आलिख्य विद्येयन्तु नवाक्षरी ॥६८॥

---

६३ । प्रातःकाले इति । सिन्दूरेण नवकोणं मण्डलं विधायेत्यर्थः ।

६८ । वाग्भवमित्यादि । मन्त्रोद्धारस्तु—ऐँ ह्रीँ श्रीँ क्लीँ कामाय नमः, इति ।

---

1. '-भूस्थपिष्टादावधि-' A. 2. '-प्रभुः' A. 3. '-न्नव सं-' C. 4. 'एवं' C. 5. '-त् कुङ्कुमाद्यै-' C. 6. 'रक्तवस्त्रं रक्तमाल्यं' C. 7. 'कामार्थिकं' B.

[ रतिमन्त्रः ]

[1]कामबीजत्रयञ्चोक्त्वा [2]कामयात्मैकमुच्चरेत् ।
रत्यै नमश्चाष्टवर्णा रतिविद्या प्रकीर्त्तिता ॥ ९९ ॥

[ प्रीतिमन्त्रः ]

प्रीतिं वदेद्रतिस्थाने प्रीतिमन्त्रोऽष्टवर्णकः ॥ १०० ॥

[ रतिप्रीत्योर्ध्यानम् ]

गौरश्यामे रतिप्रीती क्रमेण मणिभूषणे ।
पद्मताम्बूलहस्ते च रक्तवर्णविभूषिते ॥ १०१ ॥
विद्याभरण[3]भूते च पुष्पदामविराजिते ।
वामदक्षिणयोर्ध्यानं कामदेवस्य कीर्त्तितम् ॥ १०२ ॥

[ पश्चाद् वसन्तपूजनम् ]

वसन्तं पूजयेत् पश्चात् कदम्बवनमध्यगम् ।
सौवर्णं वामहस्ते च सुधापूर्णघटान्वितम् ॥ १०३ ॥
दक्षहस्ते च दधतं नानापुष्पसमुच्चयम् ।
साङ्गं कामं प्रपूज्याथ धूपदीपादि दर्शयेत् ॥ १०४ ॥

[ मदनपूजानन्तरं देवीपूजा ततः कुमारीपूजा च ]

[4]मदने पूजितः कामः [5]सर्वकार्यार्थसाधकः ।
[6]तञ्च सम्यक् प्रपूज्याथ महात्रिपुरसुन्दरीम् ॥ १०५ ॥

---

९९ । कामबीजेति । कामबीजत्रयमुक्त्वा पुनः काममुच्चरेदिति । तेन "क्लीँ क्लीँ क्लीँ क्लीँ रत्यै नमः" इत्यष्टाक्षरमन्त्रो भवति ।

१०० । रतिस्थाने प्रीतिं वदेदिति । तेन क्लीँ क्लीँ क्लीँ क्लीँ प्रीत्यै नमः इति प्रीति-मन्त्रः ।

---

1. 'कामबीजा'दिपादचतुष्टयं नास्ति C. 2. 'काममुत्तममुच्चरेत्' A. 3. 'भूषे च' A. 4. 'मदनैवं प्रपूज्याथ' B. 5. 'सर्वकामार्थसाधकैः' C. 6. 'तथा' C.; 'पञ्चसल्यं' A.

यजेत्तत्कालसम्भूतैः [1]कुसुमैश्चन्द्रचन्दनैः ।
सौगन्धिकैः [2]सकाश्मीरैर्नानाफलरसैरपि ॥ १०६ ॥
अष्टोत्तरशतं कृत्वा कुमारीं पूज[3]येत्ततः ।

[ सुवासिनीपूजा योनिपूजा च ]

सुवासिनीश्च संपूज्य योनिमण्डलमर्च्चयेत् ॥ १०७ ॥

[ महादेवीपूजा पूर्णहोमश्च ]

पूजयित्वा महादेवीं पूर्णाहुतिं समाचरेत् ।

[ ब्राह्मणपूजानन्तरं गुरुदक्षिणादानम् ]

ब्राह्मणानपि संपूज्य प्रदद्याद् गुरुदक्षिणाम् ॥ १०८ ॥

[ मदनारोपणफलम् ]

अनेन विधिना मन्त्री मदनारोपणं यजेत् ।
तस्य सांवत्सरी पूजा सफला नान्यथा भवेत् ॥ १०९ ॥

[ वैशाखपूर्णिमायां विशेषपूजा ]

[4]वैशाखे मासि पूर्णायां स्वर्णपुष्पैर्यजेत् पराम् ।
अथवा चन्द्रकस्तूरीचन्दनैः शिशिरोदकैः ॥ ११० ॥

[ ज्यैष्ठपूर्णिमायां विशेषपूजा ]

ज्यैष्ठे मासि च पूर्णायां कदलीपनसाम्रजैः ।
फलैः प्रपूजयेद्देवीं पूर्ववत् सर्वसिद्धये ॥ १११ ॥

[ पवित्रारोपणकथनम् ]

पवित्रारोपणं वक्ष्ये साधकानां हिताय च ॥ ११२ ॥

---

१०७ । सुवासिनीमिति । पतिवत्नीमित्यर्थः । योनिपूजाप्रकारश्च प्राणतोषण्यादौ सप्तमकाण्डे चतुर्थपरिच्छेदे द्रष्टव्यः ।

---

1. 'प्रसूनै-' C. 2. 'सहकारैः' A. 3. '-येद् बुधः' C. 4. 'वैशाखे इत्यादि' पादाष्टकं नास्ति C.

[ पवित्रपूजायाः कर्तव्यता ]

वर्षमात्रकृता पूजा सफला भवति [1]ध्रुवम् ।
तस्मात् पवित्रपूजा हि कर्त्तव्या सिद्धिहेतवे ॥ ११३ ॥

[ पवित्रारोपणकालः ]

आरभ्य मिथुनार्केण तुलासंक्रमणान्तरम् ।
अतिरम्यां महापूजां पवित्राणां विशेषतः ॥ ११४ ॥
पक्षद्वयोः प्रपूज्या स्याच्चतुर्थ्यामष्टमीदिने ।
नवम्यां वा चतुर्दश्यां पवित्रारोपणञ्चरेत् ॥ ११५ ॥

[ आषाढपौर्णमास्यां विशेषः ]

आषाढे पौर्णमास्यां वा पवित्रैः पूजयेच्छिवाम् ।
सौवर्णरौप्यताम्रैर्वा सूत्रैः पट्टसमुद्भवैः ॥ ११६ ॥

[ नवतन्तुनिर्माणम् ]

यज्ञसूत्रसमुद्भूतैः पद्मनालसमुद्भवैः ।
[2]त्रसरी-सूत्रसम्भूतैः काषायसूत्रसम्भवैः ॥ ११७ ॥
दर्भ[3]मुञ्जशणोद्भूतैर्नवधा गुणितैः शुभैः ।
कुर्यात् पवित्रशक्तीनां सर्वासां षोडशाङ्गुलैः ॥ ११८ ॥
नवाङ्गुलैर्वा तत्संख्या शरग्रन्थिसमन्वितम् ।
होमे त्वेकशरग्रन्थिं कृत्वा तैरर्चितः क्रमात् ॥ ११९ ॥

[ नवतन्तुषु देवपूजा ]

प्रालेयचन्द्रमा वह्निब्रह्म[4]नागो गुहो हरिः ।
[5]मदात्त-सर्वदेवांश्च नवतन्तुषु पूजयेत् ॥ १२० ॥

---

१२० । प्रालेयेति । एतान् प्रालेय-चन्द्रमा-वह्नि-ब्रह्म-नाग-गुह-हरि-मदात्त-सर्वदेवान् नवतन्तुषु नवान् पूजयेदित्यर्थः ।

---

1. 'स्फुटम्' C. 2. 'त्रसरी'त्यादिपादद्वयी नास्ति A-B. 3. '-पुञ्ज-' A. 4. 'ब्रह्मवागोष्ठता हरिः' A-B. 5. 'सदाक्ष-' B.

शिरोमन्त्रेणाभिमन्त्र्य हृन्मन्त्रेण शुभैर्जलैः ।
[1]प्रक्षाल्याभ्युक्षणं कुर्याच्छिवमन्त्रेण देशिकः ॥ १२१ ॥
अवरुध्य च नेत्रेण ग्रथितं कवचेन तु ।
रोचनाकुङ्कुमाभ्याञ्च रक्तचन्दनचन्दनैः ॥ १२२ ॥
कस्तूरीघुसृणाद्यैश्च कर्पूरैर्विमलैरपि ।
गैरिकाद्यैर्विचित्रञ्च कारयेत् सुमनो[2]हरम् ॥ १२३ ॥
मूलमन्त्रेण चाभ्युद्य स्थापयेद्दशकोणके ।

[ पवित्रवृन्दस्थापनम् ]

पवित्रवृन्दसकलं षडङ्गेन प्रपूजितम् ॥ १२४ ॥

[ पूर्वदिने घटस्थापनम् ]

कृत्वा तु पूर्वदिवसे घटस्थापनमेव च ।

[ पवित्रे सूत्रसंख्या ]

अष्टोत्तरशतैः सूत्रैर्मन्त्रेण परिकल्पितम्[3] ॥ १२५ ॥

[ संख्यातारतम्येनोत्तममध्यमाधमत्वकथनम् ]

उत्तमं तद् विजानीयात्तदर्द्धं मध्यमं भवेत् ।
तस्याप्यर्द्धं कनिष्ठं स्यात्त्रिविधं कथितं क्रमात् ॥१२६॥

---

१२१—२४। शिरोमन्त्रेणेत्यादि। शिरोमन्त्रेण 'स्वाहा' इत्यनेनाभिमन्त्र्य 'नमः' इति हृन्मन्त्रेण शुभैर्जलैः प्रक्षाल्य 'हौं' इति शिवमन्त्रेणाभ्युक्षणं कुर्यात्। वौषट् इति नेत्रमन्त्रेण अवरुध्य 'हुं' इति कवचमन्त्रेण संग्रथ्य गोरोचना-कुङ्कुमादिभिर्विचित्रं कारयेत्। घुसृणं कुङ्कुमम्। "कुङ्कुमं पीतकावेरं घुसृणं कुसुमात्मकम्।" इति हारावली।

---

1. 'प्रक्षाल्ये'त्यादिपादषट्कं नास्ति A. 2. '-हराम्' A. 3. '-ल्पितैः' C.

पवित्रमूलशक्तीनां षण्णवत्यङ्गुलैर्युतम् ।
शर[1]ग्रन्थ्यादिकं कृत्वा त्रितयन्तु समर्पयेत् ॥ १२७ ॥

[ अधिवासे पूजादि ]

अधिवासनवेलायां यवान् [2]विस्तीर्य साधकः ।
देवीकुम्भं प्रतिष्ठाप्य पूर्णं चामीकरादिभिः ॥ १२८ ॥
देवीमावाह्य तत्कुम्भे[3] मूलमन्त्रेण पूजयेत् ।
[4]चन्दनैः कुमुदाद्यैश्च पुष्पैः फलयुतैरपि
एला[5] कक्कोलजातीभिरुपेतैः पूजयेच्छिवाम् ॥ १२९ ॥

[ पवित्रार्पणम् ]

ततः क्रमं समभ्यर्च्च्य पवित्रार्पणमाचरेत् ।
श्रीविद्यया पवित्राणि गुरोर्नाम्ना समर्पयेत् ॥ १३० ॥
गुरुभ्यस्त्रिविधेभ्यश्च [6]तिथिनित्यागणेषु च ।
पवित्रारोपणं कुर्यान्नवचक्रेश्वरी[7]मपि ॥ १३१ ॥
रश्मिवृन्दासु सर्वासु प्रत्येकं तारपूर्वकम् ।
ततश्च कुरुकुल्लायै पवित्रञ्च समर्पयेत् ॥ १३२ ॥

[ गुरोः सन्तोषोत्पादः ]

यथाविभवरूपेण गुरुं सन्तोषयेद् बुधः ।
स्वर्णालङ्कारवस्त्रैश्च नानारत्नसमुच्चयैः ॥ १३३ ॥
तत्प्रसादं पवित्रञ्च धारयेत् साधकोत्तमः ।
तदङ्गहोमं निर्वर्त्त्य पवित्रेण सम[8]र्पयेत् ॥ १३४ ॥

---

१३१। गुरुभ्य इति। त्रिविधेभ्यः, परम-परापर-परमेष्ठि-भेदात् त्रिविधत्वम्।

---

1. '-ग्रन्थान्वितं' ? C. 2. 'विस्तार्य' C. 3. 'कुम्भैस्तु' A. 4. 'चन्दनैश्च मुकुन्दाद्यैः' A. 5. 'एता-' A. 6. 'भिन्ने नित्यागमेषु च' A-B 7. '-रीष्वपि' C. 8. 'समर्चयेत्' A.

[ कुमार्यादीनां पूजनम् ]

कुमारीपूजनं कार्यं ततः सुवासिनीगणम् ।
योगिन्यो योगिनश्चैव ब्राह्मणा विविधा गणाः ।
पूज्या हि साधकेन्द्रेण यदीच्छेद्धितमात्मनः ॥ १३५ ॥

[ श्रावणपूर्णिमायां कर्तव्यम् ]

श्रावणे मासि पूर्णायां सर्वापत्परिशान्तये ।
सिन्दूरकुङ्कुमाद्यैश्च चन्दनैर्विविधैः फलैः ।
[1]उत्पलैः कुमुदैरेव पूजयेत् परमेश्वरीम् ॥ १३६ ॥

[ भाद्रपूर्णिमायां कर्तव्यम् ]

अथ भाद्रपदे मासि पूर्णायां केतकोद्भवैः ।
प्रसूनैरर्चयेद्देवीं नानाविभवविस्तरैः ॥ १३७ ॥

[ आश्विनपूर्णिमायां कर्तव्यम् ]

आश्वयुज्यां विशेषेण दर्शान्तं प्रतिपत्तिथिम् ।
[2]आरभ्य पूजयेद्देवीं पौर्णमास्यन्तमेव च ॥ १३८ ॥
जवापराजिताद्रोणैः करवीरैः सुपङ्कजैः ।
सौगन्धिकैश्च कह्लारैर्वस्त्रभूषणदर्पणैः ॥ १३९ ॥
व्यजनैः शुद्धसिन्दूरैश्चामरैश्चन्दनादिभिः ।
नानाविधफलैर्द्रव्यैर्नानारसरसायनैः ॥ १४० ॥
पूजयित्वा जपेद् विद्यां [3]हुनेत् प्रतिदिनं शतम् ।
सहस्रं वापि जुहुयात्त्रिपुराप्रीतिहेतवे ॥ १४१ ॥
तेन विद्या भवेत् सिद्धा नृपतिं कुरुतेऽर्चनात् ।

---

1. 'उत्पलै'रित्यादिपादाष्टकं नास्ति A-Bपुस्तकयोः । 2. 'अवश्यं' A. 3. 'जुहुयात्' A-C.

सप्तम्यामथवाष्टम्यां नवम्यां [1]वा प्रपूज्य च ।
अवश्यमेव जानीयाल्लङ्घने तद्विपर्ययः ॥ १४२ ॥

[ कार्त्तिकपूर्णिमायां कर्तव्यम् ]

कार्त्तिके मासि पूर्णायां कुङ्कुमादिभिरर्च्चयेत् ।
रात्रौ दीपान् निवेद्याथ होमं कुर्याद् घृतेन च ॥१४३॥
देव्यग्रे स्थापयेद्दीपान् विद्यया षोडश क्रमात् ।
शक्तीनामेकमेकन्तु स्थापयेत्त[2]त्तदग्रतः ॥ १४४ ॥
अथवा [3]भाजने मध्ये एकं तदभितो नव ।
कृत्वा निवेदयेन्मूलविद्यया सप्रसूनकम् ॥ १४५ ॥

[ मार्गशीर्षपूर्णिमायां कर्तव्यम् ]

वृश्चिके मासि पूर्णायां नारिकेलाम्बु चन्द्रयुक् ।
निवेद्याभ्यर्च्चयेन्मासं पिष्टपूपैर्यथाविधि ॥ १४६ ॥

[ पौषपूर्णिमायां कर्तव्यम् ]

पौषे मासि च पूर्णायां शर्कराभिर्गुडेन वा ।
पूजयेद् भूमिसंसिद्धैश्च गव्यं दुग्धं निवेदयेत् ॥१४७॥

[ माघपूर्णिमायां कर्तव्यम् ]

माघे मासि च पूर्णायां तिलैः शुक्लैस्तथेतरैः ।
पूजयेद् गन्धनैवेद्यैः सितपुष्पादिभिः सह ॥ १४८ ॥

[ फाल्गुनपूर्णिमायां कर्तव्यम् ]

फाल्गुने मासि पूर्णायां चम्पकैः स्वर्णराजतैः ।
चूतसौगन्धिककुसुमैः पुजयेदीप्सितात्तये ॥ १४९ ॥

---

1. 'साप्रपूजनम्' ? A. 2. '-येत्त त-' A. 3. 'भोजनं मध्ये एकं तदभिते नवः' ? C.

[ चैत्रादिपूर्णिमासु कर्तव्यतोपदेशः ]

विषुवायन[1]दर्शेषु [2]युगादिषु समर्च्चनम् ।
कुर्याद् वैशेषिकं तेषु आगमोक्तेषु तेष्वपि ॥ १५० ॥

[ द्वादशमासीयकृत्यानामवश्यकर्तव्यता ]

इति द्वादशमासीयकृत्यं कुर्यात् प्रयत्नतः ।
वर्षे वर्षे च मन्त्रज्ञो ह्यन्यथा पापभाग् भवेत् ।
योगिनीनां भवेद् भक्ष्यः क्रुद्धा श्रीत्रिपुरा भवेत् ॥१५१॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्री-तत्त्वचिन्तामणा-
वेकविंशतितमः प्रकाशः ॥ २१ ॥

---

१५० । विषुवायनेति । महाविषुवपूर्णिमायां, जलविषुवपूर्णिमायां, उत्त-रायणपूर्णिमायां, दक्षिणायनपूर्णिमायां, युगाद्या-मन्वन्तरादिषु, दर्शेषु अमावस्यासु चेति सर्वास्वेव विशेषपूजा कर्त्तव्या इति बहुवचनेन सूचितम् ।

---

1. '-दानेषु-' A. 2. 'युग्मादिषु' ? A.

# द्वाविंशतितमः प्रकाशः

———:०*०:———

[ ज्ञानदूतीकथनम् ]

ज्ञानदूतीमथो वक्ष्ये यया[1] ब्रह्म सनातनम् ।
प्रकाशाख्ये यागगेहे [2]प्रविशेद् वरमन्दिरे ॥ १ ॥
इच्छाज्ञान[3]क्रियादूतीरचिते[4] स्वभगान्विते ।
अनया परया दूत्या तत्र ज्ञानमये शिवे ॥ २ ॥
[5]पर्यङ्के पुरुषार्थैश्च वेदैश्च परिमण्डिते ।
आत्मान्तरात्मपरमात्मज्ञानात्मपरिभूषिते ॥ ३ ॥
तत्पदार्थः पदार्थस्त्वं तत्त्वं पदसमुच्चयः ।
पदार्थत्रयमेतत्तु [6]ज्ञानाद् ब्रह्मप्रकाशकम् ॥ ४ ॥
एतत्सूत्रमयैः पट्टैर्गुम्फिते सुमनोहरे ।
प्रपूजयेत् परां तत्र भवेद् भूतिश्चतुर्विधा ॥ ५ ॥
हस्तिनी शङ्खिनी चान्या चित्रिणी पद्मिनी तथा ।
सर्वाभरणसम्पन्नाः सुन्दर्यश्चारुलोचनाः ॥ ६ ॥
वैखरी हस्तिनी ज्ञेया स्थूलावस्था परा कला ।
ययेदं धार्यते सर्वं ब्रह्माण्डपरिमण्डलम् ॥ ७ ॥
वर्गाष्टकेन नियतं सूते दिग्गजसञ्चयम् ।
तेनैव करिणी प्रोक्ता मध्यमा शङ्खिनी भवेत् ॥ ८ ॥

---

७। वैखरी अकारादिक्षकारपर्यन्तवर्णमाला, विद्येति श्रीधरः ।

---

1. 'मया' A. 2. 'प्रविश्य' C. 3. '-ज्ञानार्चिका-' A., '-ज्ञानात्मिका' B. 4. '-चरित्रेषु भगान्विते' A-B. 5. 'पर्यङ्के' इत्यादिपादचतुष्टयी नास्ति A-B. 6. 'ज्ञानब्रह्म-' C.

शङ्खिनी [1]च महाशुद्धा सर्वपापविवर्जिता ।
सर्वदेवप्रिया सा हि कान्तिसौरभ्यशोभिता ॥ ८ ॥
तथा वनस्पतिगता मध्यमाशु[2]शुभग्रहा ।
चित्रिणी वल्लरी देवी सर्वशक्तिस्वरूपिणी ॥ ९ ॥
शिवशक्तिमयी देवी [3]पाति चैव जगत्त्रयम् ।
तेषु सर्वेषु पश्यन्ती जीवेषु परमाश्रया ॥ १० ॥
[4]एवं ब्रह्मणि संलीना पराराध्या परेश्वरी ।
तां दूतीं तत्र संपूज्य शमादिकुसुमैः शुचिः ॥ ११ ॥
तदङ्गेषु कलाः पूज्याः क्रमेण साधकोत्तमैः ।
यथा शान्तिकला बोधकला व्याप्तिकला परा ॥ १२ ॥
[5]ज्ञानात्मनः कला ज्ञेया चतुर्थी स्यात्ततः परम् ।
पद्मिनी चापरा ज्ञेया हंस(ः?) [6]स्वच्छविकाशिता ॥१३॥
हंसः ? द्वन्द्वेन पद्मं हि [7]घल्का ? सङ्कोचमेव तु ।
विकाशं [8]मात्रि ? [9]सौभाग्यं तथा वर्णविलासतः ॥१४॥
परा प्रकाशमायाति पद्मिनी तु मता भवेत् ।
तस्य देहे साधकेन्द्रैः कलाः पूज्यास्तु षोडश ॥ १५ ॥
चित्कला सकला शान्तिकला [10]कालाकला परा ।
[11]आज्ञावास्तु कला ज्ञेया संलीना परवस्तुनि ॥ १६ ॥
भूयः शान्तिकलाद्यास्तु[12] ज्ञानात्मनः प्रकाशिताः ।
विरागता मोक्षकला परमात्मकला तथा ॥ १७ ॥

---

1. 'तु' C. 2. 'या शुभ-' C. 3. 'पीतिश्चैव' A. 4. 'परं' A-C. 5. 'ज्ञानात्मन' इत्यादि 'कालाकला परे'त्यन्तं नास्ति A. 6. 'कच्छविलसिता' A. 7. 'त्यक्ता' 8. 'याति' A. 9. 'सौरभ्यं' A. 10. 'कलाशान्तिः कलापरा' A. 11. 'आत्मनः स' C. 12. '-श्च' C.

विद्याकलाचतस्रस्तु विज्ञेयाश्चान्तरात्मनि ।
विद्यासन्तोषता तृप्तिः परं ब्रह्मप्रकाशिकाः ॥ १८ ॥

परमात्मकला ज्ञेया संलीना परवस्तुनि ।
एतास्तु षोडश कलाः श्रीविद्यान्तेषु संस्थिताः ॥१९॥

[1]षोडशान्ता ब्रह्मरूपा कला षोडशरूपिणी ।
आत्मयोगस्वरूपेण त्रैलोक्यं रचयत्यसौ ॥ २० ॥

अन्तरात्मा सत्त्वरूपो रजोरूपश्च[2] विश्रुतः ।
अतएव सत्त्वरूपो रजोरूपः परः शिवः ॥ २१ ॥

परमात्म(ा) विधिर्ज्ञेयो ज्ञानात्मा तूर्य[3]साधकः ।
एताः कलाश्च नियतं परदेहे[4] प्रकाशयेत् ॥ २२ ॥

तत्पदार्थन्तु जानीहि मुखमस्या न संशयः ।
ततः पदपदार्थाभ्यां कुचयुग्मक्रमेण तु ॥ २३ ॥

नादो[5] मूलं हि योगस्य शास्त्रस्येति विनिर्णयः ।
नादस्तु सर्वभूतानां भवेद् योनिर्न संशयः ॥ २४ ॥

शक्तिं संपूजयेत्तत्र त्रिकोणे भगमालिकाम् ।
सर्वानन्दमये मध्ये सुन्दरीं पूजयेत् पराम् ॥ २५ ॥

स्वात्मलिङ्गे ततो मन्त्री शिवञ्च परिपूजयेत् ।
तारञ्च भुवनेशानीं महात्रिपुरसुन्दरीम् ॥ २६ ॥

नमः शिवाय विद्येयं दशार्णा परिकीर्त्तिता ।
परस्परस्वभावेन ब्रह्मानन्दरसो भवेत् ॥ २७ ॥

---

1. 'षोडशार्णा महाविद्या' C. 2. '-स्तु' C. 3. '-शाश्वतः' A-C. 4. '-देशे' A.
5. 'नादं' C.

तं रसं मनसा मन्त्री [1]वहन्नासागतं स्मरेत् ।
अर्घ्यामृतेन संयोज्य ततः श्रीचक्रमर्च्चयेत् ॥ २८ ॥
कुण्डगोलोद्भवं द्रव्यं प्रोक्तं परमदुर्लभम् ।
ब्रह्मानन्दमये ज्ञाने पापपुण्यविवर्जिते[2] ॥ २९ ॥
न ब्राह्मणो ब्राह्मणस्तु न क्षत्रः क्षत्रियस्तथा ।
वैश्योऽपि न च वैश्यः स्यान्न शूद्रः शूद्र एव च ॥३०॥
चाण्डालो नैव चाण्डालः पुक्कसो नैव पुक्कसः ।
सर्वं समं विजानीयात् परमार्थविनिश्चयात् ॥ ३१ ॥
आकाशात् पतितं तोयं [3]बिन्दुमार्गेण गच्छति ।
ग्राममध्ये स्थितं [4]तोयं विष्ठामूत्रादिपूरितम् ॥ ३२ ॥
मृगगोऽश्वादि[5]मार्जारखरादिरुधिरान्वितम् ।
समस्तमपि गङ्गायां प्रयाति मिलितं यथा ॥ ३३ ॥
गङ्गामृतं भवेत् सर्वं [6]कालुष्यं नैव तिष्ठति ।
यथा [7]संविन्मये ज्ञाने समता सर्व[8]जन्तुषु ॥ ३४ ॥
सर्वद्रव्येषु नियतं समता नात्र संशयः ।
यथा सूर्यप्रकाशोऽयं सत्त्वेनैव प्रवर्त्तते ॥ ३५ ॥
[9]ततः स्वस्यापि चान्यस्य तमः [10]संहरति क्षणात् ।
शोषय(न्) दुग्ध[11]मूत्रादिचन्दनं नैव कर्दमम् ॥३६॥
अत एव विचारज्ञो मन्त्री सर्वमयो भवेत् ।
सिद्धिस्तदैव विज्ञेया श्रीगुरोः कृपया परा ॥ ३७ ॥

---

1. 'बृहद् वासागतं' A. 2. '-र्जितैः' C. 3. 'निम्न-' C. 4. 'सर्वं' C. 5. '-ऽश्वाहि-' C. 6. 'मानुष्यं' A. 7. 'यथा समाश्रये'(?) A. 8. '-वर्णेषु'(?) A. 9. 'उत्तमस्यापि चान्यस्य' C. 10. 'संहरणे-' A. 11. '-मुद्रादीन्' C.

[ अद्भुतत्रिकूटसाधनप्रकारकथनम् ]

तथाद्भुतं प्रवक्ष्यामि त्रिकूटस्या[1]पि साधनम् ।
शुक्लाम्बरधरो [2]धीरो [3]गन्धकस्तूरीमण्डितः ॥ ३८ ॥

मुक्ताफलस्फुरद्भूषाभूषितः शुक्लमाल्यधृक् ।
धवलागारमध्ये तु ब्रह्मचर्य[4]व्रतो नरः ॥ ३९ ॥

पूजयेच्छुभ्रकुसुमैर्नैवेद्यैश्च समुज्ज्वलम् ।
पायसं घृतसंपूर्णं तथाऽमृतफलौदनम् ॥ ४० ॥

दुग्धं मोदक[5]संयुक्तं नानापूपान्नपूरितम् ।
नैवेद्यं दर्शयेद्देव्यै वागीश्वर्यै सुसाधकः ॥ ४१ ॥

[ तत्र वाग्भवकूटसाधनम् ]

मनःसङ्कल्पशुभ्रैर्वा साधयेद् वाग्भवाक्षरम् ।
वाग्भवाख्यां जपेद् विद्यां वागीशीं संस्मरेद् बुधः ॥४२॥

[ वागीशीध्यानम् ]

कर्पूरधवलां शुभ्रां शुभ्राभरणभूषिताम् ।
मुक्ताफलामलमणिजपमालालसत्कराम् ॥ ४३ ॥

पुस्तकं वरदानञ्च दधतीमभयप्रदाम् ।
कुचभारभराक्रान्तां दीपाभां तन्तुरूपिणीम् ॥ ४४ ॥

गच्छन्तीं ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु ।

[ देव्या विशेषचिन्ता ]

विसर्गस्थामृतं दिव्यं क्षीरधारोपमं ध्रुवम् ॥ ४५ ॥

---

४२ । 'वाग्भवाख्या'मिति ऐं इति बीजमित्यर्थः ।

---

1. 'त्रिकूटस्यैव' C. 2. 'धीरो' A. 3. 'कङ्क-' A. 4. '-रतो' C. 5. '-सम्पूर्ण' C.

पीत्वा कुलामृतञ्चैव पुनरेव विशेत् कुलम् ।
पुनरेव कुलं गच्छेद् द्वादशान्ते निवेशयेत् ॥ ४६ ॥
सहस्रारे महापद्मे वाग्भवं पूर्णचन्द्रकम् ।
ब्रह्मग्रन्थिं ततो भित्त्वा सततषष्ठात्तधारया ॥ ४७ ॥
लम्बिकां ब्रह्ममार्गेण तालुमूले प्रवेशयेत् ।
जिह्वामापूर्य मन्त्रज्ञो मातृकावर्णरूपिणीम् ॥ ४८ ॥
[1]वहिर्गताश्च वाग्रूपा(ं) जिह्वाग्रेऽमृतरूपिणीम् ।
आ मूलाद् ब्रह्मरन्ध्रान्तं तस्माज्जिह्वाप्रदेशकम् ॥ ४९ ॥
वाग्भवां बीजरूपान्तां दीपाकारां विचिन्तयेत् ।
हस्तयोः पादयोर्मन्त्री तथा नाडीत्रयेषु च ॥ ५० ॥
आधारात्तु समुत्थाप्य वाग्भवं द्वादशे नयेत् ।
द्वादशाधारमानीय तद्ग्रन्थिं परिभेदयेत् ॥ ५१ ॥
तस्माज्जिह्वाग्रमानीय दीपाभां परिभावयेत् ।

[ अस्य लक्षवारजपफलम् ]

लक्षमेकमिदं जप्त्वा सर्वपापहरः स्वयम् ॥ ५२ ॥
वाक्पतिर्जायते [2]सद्यो मूकोऽपि सुकविर्भवेत् ।
वादे सदसि सद्वाक्यस्तम्भकः प्रतिवादिनः ॥ ५३ ॥
सत्पण्डितघटा[3]टोपजेता प्रतिहतप्रभः ।
सत्तर्कप्रतिवाक्यार्थ[4]सर्वालङ्कारशास्त्रवित् ॥ ५४ ॥
पदगुम्फैर्महा[5]वाक्यकर्त्ता मन्त्री [6]प्रजायते ।
अव्याहतमतिः शास्त्रे विज्ञेयो वाक्पतिर्भवेत् ॥ ५५ ॥

---

1. 'वहिष्कृता-' C. 2. 'मूकः सद्यश्च सुकवि-' C. 3. '-डोप-' C. 4. '-शब्दालङ्कारसारवित्' C. 5. '-काव्य-' C. 6. 'प्रयोजयेत्' A.

[ बालकजिह्वायां मन्त्रलेखनम् ]

बालकस्य तु जिह्वायां विदिनाभ्यन्तरे [1]लिखेत् ।
मधुना श्वेतदूर्वाभिः किं वा स्वर्णशलाकया ॥ ५६ ॥
अमृतं वाग्भवं कूटं वागीशत्वप्रदायकम् ।
स एव पण्डितः श्रीमान् [2]स चामूर्खो भवेत् किल ॥५७॥

[ बालकस्य मूर्ध्नि जपफलम् ]

एतद् वाग्भवकूटन्तु [3]बालकस्यापि मूर्द्धनि ।
हस्तं दत्त्वा यदि जपेच्छतमष्टोत्तरं बुधः ॥ ५८ ॥
सोऽपि श्लोकान् सर्वथैव करोति वाक्पतिर्यथा ।
एतत्तु कथितं सारं वाग्भवस्यापि साधनम् ॥ ५९ ॥

[ चुलुकपानम् ]

अथो देवीं सचक्रान्तचुलुके सलिले स्मरन् ।
मातृकासहितां विद्यां त्रिरावृत्त्याऽमृतात्मिकाम् ॥६०॥
नाडीं सरस्वतीं जिह्वां दीपाकारां स्मरन् पिबेत् ।

[ चुलुकपानफलम् ]

अब्दाच्चतुर्विधं तस्य पाण्डित्यं भुवि जायते ॥ ६१ ॥

[ प्रातःकाले पानफलम् ]

एवं नित्यमुषःकाले यः कुर्याच्छुद्धमानसः ।
स योगी सत्यविज्ञानी स कविर्भवति ध्रुवम् ॥ ६२ ॥

[ कामकूटसाधनफलम् ]

अथ वक्ष्यामि सौभाग्यं कामकूटस्य साधनम् ।

[ कामकूटसाधनप्रकारः ]

रक्तालङ्कारसुभगो रक्तमा[4]ल्यानुलेपनाम् ॥ ६३ ॥

---

1. 'भवेत्' C. 2. 'न च' C. 3. 'वागीशस्यापि' B-C. 4. 'गन्धानु-' A.

रक्तवस्त्रान्वितां सम्यङ्मध्यकामकलात्मना ।
रक्तपुष्पैश्च विविधैः कुसुमादिभिरर्चयेत् ॥ ६४ ॥

[ कामकलाचिन्ता ]

ततः कामकलारूपां मदनाङ्कुरमध्यमे ।
उद्यदादित्यसङ्काशां स्फुरद्दीपशिखाप्रभाम् ॥ ६५ ॥
गच्छन्तीं ब्रह्ममार्गेण ब्रह्मरन्ध्रान्तमेव च ।
[1]पतद्भिरिन्दुधाराभीरक्तलाक्षारसोपमाम् ॥ ६६ ॥
बन्धूककुसुमाकारां[2] कान्तिभूषणभूषिताम् ।
इक्षुकोदण्डपुष्पेषुवराभयलसत्कराम् ॥ ६७ ॥
कामराजस्वरूपान्तु बालार्ककिरणारुणाम् ।
चिन्तयेत् कुल[3]पीठेषु संक्षोभो जायते क्षणात् ॥६८॥
कामकला(ं) हृदो[4] मध्ये [5]बन्धूकसदृशप्रभाम् ।
चित्ताकर्षणकारी च नारीणाञ्च विशेषतः ॥ ६९ ॥
मूर्ध्नि भागे कामकला वर्षन्ती [6]रक्तधारया ।
धारणात्[7] संप्रयोगेण करोति वशगं जगत् ॥ ७० ॥

[ कामकूटप्रयोगकथनम् ]

[8]तोषयन्ती जगत् सर्वं प्रयोगं कथयाम्यथ ।
[9]विदर्भ्याद्येन कामेन मन्मथान्तकृतं कुरु ॥ ७१ ॥
कन्दर्पसंपुटं कृत्वा कोणगर्भगतं[10] ततः ।
मकरध्वजसंज्ञन्तु कारयेत् साधकोत्तमः ॥ ७२ ॥

---

1. 'तपन्ती बिन्दुधाराभि-' A. 2. '-कारकान्ति-' C. 3. '-पीठन्तु' C. 4. 'हृदि मध्ये' A. 5. 'सिन्दूर-' C. 6. 'बिन्दु-' A. 7. 'धारणा सं-' A. 8. 'मोह-यन्ती' C. 9. 'विदर्भ्यर्थेन' A. 10. '-शतं' A.

मीनकेतुगतं कृत्वा भूर्जपत्रे सुशोभने ।
रोचनागुरुकस्तूरीकर्पूरकुङ्कुमादिभिः ॥ ७३ ॥
साध्यं प्रतिष्ठितं प्राणं कारयेद्धेममध्यगम् ।
जपेत् पञ्चसहस्रं वा कामबीजन्तु साधकः ॥ ७४ ॥
मूलं भानुसहस्रन्तु यत्नेन [1]साधयेदपि ।
अथवा नाभिमध्ये तु हृदये मुखमण्डले ॥ ७५ ॥
पद्मरागप्रतीकाशं कामराजं मनोहरम् ।
मनसा चिन्तयेद् यस्तु तस्यैश्वर्यं भवेत् किल ॥७६॥
आधाराद्नाभिपर्यन्तं प्रदीपस्य शिखां स्मरेत् ।
तस्मादुदर[2]पर्यन्तं पद्मरागसमप्रभम् ॥ ७७ ॥
[3]एतेषु वाग्भवं बीजं हृदये कामराजकम् ।
तस्यैव कर्णिकामध्ये सूर्याभां चिन्तयेदथ ॥ ७८ ॥
तस्माद् भ्रूमण्डलं यावत् पद्मरागसमप्रभम् ।
रक्तवस्त्रपरीधानो लाक्षा[4]रसगृहे स्थितः ॥ ७९ ॥
रक्तासनोपविष्टस्तु रक्तमाल्यैर्विभूषितः ।
परमानन्दहृदयस्त्रिपुरीकृतविग्रहः ।
एवम्भूतवपुः कान्तं कामराजं विचिन्तयेत् ॥ ८० ॥

[ शक्तिकूटसाधनम् ]

अथातः संप्रवक्ष्यामि [5]शक्तिकूटस्य साधनम् ॥ ८१ ॥
सृष्टिसंहारपर्यन्तं शरीरं चिन्तयेत् पराम् ।
[6]स्रवत्पीयूषधाराभि[7]र्वलन्तीं विषहारिणीम् ॥ ८२ ॥

---

1. 'धारये-' C. 2. '-हृदय-' A-B. 3. 'एतेषु' इत्यादिपादषट्कं नास्ति C.
4. '-हण-' A-C. 5. 'शान्तिकूट-' A. 6. 'भवेत् पी-' A. 7. '-वर्षन्तीं' C.

हेमप्रभाभासमानां विद्युन्निकरसुप्रभाम् ।
स्फुरच्चन्द्रकलापूर्णकमलां वरदाभयौ ॥ ८३ ॥
ज्ञानमुद्राञ्च दधतीं साक्षादमृतरूपिणीम् ।
ध्यात्वा विषं हरेन्मन्त्री [1]नानाकारव्यवस्थितम् ॥८४॥
[2]हृदि शान्तादिनान्नन्तं(?) जगदाह्ला[3]दनं परम् ।
पुरः कण्ठादितात्वन्तं शक्तिकूटं विचिन्तयेत् ॥ ८५ ॥
आधाराद् ब्रह्मरन्ध्रान्तं तस्मादाधारकावधि ।
अथ मध्याच्छक्ति[4]कूटं विद्युदग्निसमप्रभम् ॥ ८६ ॥
केवलं पद्मरागन्तु भ्रुवोर्मध्ये विचिन्तयेत् ।
तस्मादाब्रह्मरन्ध्रान्तं तुरीयं पद्मरागधृक् ॥ ८७ ॥
सहस्रारात्तु मूलान्तं पद्मरागसमप्रभम् ।

[ कुलशक्तिचिन्ता ]

तस्मादाब्रह्मरन्ध्रान्तं कुलशक्तिं विचिन्तयेत् ॥ ८८ ॥
वैनतेयसमो मन्त्री विषभार[5]सहस्रनुत् ।
भूतप्रेत[6]पिशाचांश्च नाशयेन्नात्र संशयः ॥ ८९ ॥
चातुर्थक[7]ज्वरान् सर्वानपस्मारांश्च नाशयेत् ॥ ९० ॥

[ त्रिकूटसम्पन्न-महात्रिपुरसुन्दरीचिन्ताफलम् ]

अथ त्रिकूटसम्पन्ना महात्रिपुरसुन्दरी ।
चिन्तिता साधकस्याशु त्रैलोक्यवशकारिणी ॥ ९१ ॥
क्रमेण नाभिहृद्वक्त्रमण्डलस्थाऽरुणप्रभा ।
पद्मरागमणिस्वच्छचिन्तनात् साधकस्य च ॥ ९२ ॥

---

1. 'नाशकालव्यव-' A. 2. 'द्वादशान्तादि तालवन्तं' C. 3. '-दाह्लादिकं' A.
4. 'बीजं' C. 5. '-सहस्रकम्' C. 6. '-सहस्रांस्तु' C. 7. '-द्वारान्' C.

अणिमादिगुणैश्वर्यं सौभाग्यञ्च प्रजायते ।
तन्नाम संस्मर[1]न्मन्त्री योगिनीनां भवेत् प्रियः ॥६३॥
मातृचक्रं तस्य काये तेन सार्द्धं सुखी भवेत् ।
पुत्रवान् धनवान्मन्त्री मन्त्रध्यानान्न संशयः ॥६४॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्री-तत्त्वचिन्तामणौ
द्वाविंशतितमः प्रकाशः ॥ २२ ॥

1. '-स्मरे-' A.

# त्रयोविंशतितमः प्रकाशः

—:०*०:—

[ त्रिपुरसुन्दरीविद्याया जीवनप्राप्त्युपायकथनम् ]

महात्रिपुरसुन्दर्या यथा स्याज्जीवनान्विता ।
भुवि विद्या तथेदानीं वक्ष्यामि च सुदुर्लभाम् ॥१॥

[ विद्यायाः स्वरूपविशेषकथनम् ]

विद्युदाऽह्नीं परां [1]नित्यां कालिकां कालभाषिणीम् ।
खड्गमुण्डविकटास्यां व्याघ्रचर्मविभूषिताम् ॥ २ ॥
रक्तमाल्याम्बरधरां घोररूपां चतुर्भुजाम् ।
खड्गशूलकपालञ्च वरदां तीक्ष्णनासिकाम् ॥ ३ ॥
सिद्ध्य[2]र्थं जीवयेद्देवीं सर्वविद्यासुजीविना[3] ॥ ४ ॥

[ विद्यायाः स्वरूपान्तरम् ]

रक्ताम्भोधि[4]स्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः[5] ।
पाशं कोदण्डमिक्षूद्भव[6]कमठमथाप्यङ्कुशं पञ्च बाणान् ।
बिभ्राणासृक्कपालं त्रिनयन[7]विलसत्पीनवक्षोरुहाढ्या ।
देवी बालार्कवर्णा भवतु शुभकरी प्राणशक्तिः परा नः ॥५॥

---

१। महेति। महात्रिपुरसुन्दर्या विद्या यथा भुवि जीवनान्विता ( दीप्तिमती ) स्यात्, तथा इदानीं तां सुदुर्लभां विद्यां वक्ष्यामीत्यन्वयः ।

---

1. 'विद्यां' C. 2. 'सिद्धार्थं' B, '-र्थी' C. 3. '-विनी' C. 4. प्रयुक्तो- 5. 'कराग्रैः' C. 6. '-गुणमथचाप्य-' C. 7. '-ललिता' D.

[ दीपनीविद्याकथनम् ]

श्रीङ्कारं प्रथमञ्चैव द्रींक्लींकारं ततः परम् ।
हैं हैं कलहीं सौः कलहीं ततः पठेत् ॥ ६ ॥
क्लीं क्लीं तदधो बीजं द्रींकारं श्रीं ततः परम् ।
सर्वेषां [1]दीपनीविद्या सर्वचक्रेषु योजिता ॥ ७ ॥

[ प्रतिमायां पूजाविशेषकथनम् ]

प्रतिमायां तथा कार्या बलिं दद्यात् समाहितः ।
अनङ्गकुसुमादिश्च चक्रमध्ये प्रपूजयेत् ॥ ८ ॥
स्वयम्भु कुसुमं दत्त्वा कुण्डगोलोद्भवं तथा ।
पूजयेच्चक्रमध्ये तु वाद्यैर्नानाविधै रसैः ॥ ९ ॥
[2]हुङ्कारशब्दैः कर्पूरैर्गीतैश्च चन्दनारुणैः ।
[3]नरादिबलिदानैश्च महिषैर्मेषच्छागलैः ॥ १० ॥
गृहीत्वा शोणितं [4]पात्रे स्वकीयहृदयोद्भवम् ।
पूजयेत्त्रिपुरां देवीं जुहुयादग्निसम्मुखे ॥ ११ ॥

[ देव्या दक्षिणपार्श्वे जीवनीजपप्रकारः ]

देव्या दक्षिणपार्श्वे तु जीवनीजपमाचरेत् ।
बलीनां शोणितं दत्त्वा कालिकां पूजयेत्ततः ॥ १२ ॥
क्रोधीशो[5]त्तरसंयुक्तं नादबिन्दुकलान्वितम् ।
[6]क्रोधानन्तस्ततः पश्चात् संयुक्तेन पठेत् सुधीः ॥ १३ ॥

---

६-७। श्रीङ्कारमिति। सर्वचक्रसाधारणीं दीपनीमाह—श्रींकारमित्यादिना। तथा च "श्रीँ ह्रीँ क्लीँ हैँ हैँ कलहीँ सौः कलहीं क्लीँ क्लीँ हसौः ह्रीँ श्रीँ" इति मन्त्रो भवति।

---

1. 'जीवनी-' A-C. 2. 'हूङ्कार-' A. 3. 'वरादि-' A. 4. 'पात्रैः···द्भवेः' A, '-द्भवे' B. 5. '-शानन्त-' C. 6. 'क्रोध्यानन्त-' C.

पिनाकी च सुसूक्ष्मा च क्रोध्यानन्तस्ततः पठेत् ।
अनिलो भौतिकश्चैव तदधः [1]प्रणवं लिखेत् ॥ १४ ॥
एषा [2]ज्ञेया महाविद्या महाचक्रसमन्विता ।
महामेधाप्रदा विद्या महाघोरविनाशिनी ॥ १५ ॥
महाविद्या महाकामा महाप्रेतासनस्थिता ।
श्वेतरूपा च चन्द्रस्था बाला च भगमालिनी ॥ १६ ॥
अनन्तरूपमाख्याता सा च त्रिपुरसुन्दरी ।
परमेयं परा शक्तिः प्रथमं पार्श्वसंस्थिता ॥ १७ ॥
द्वितीया क्षितिविख्याता तत्परा पश्चिमोत्तरा ।
सा च देवी महा[3]देवी महाकालिकसुन्दरी ॥ १८ ॥
यस्या मेरोर्जगद् व्याप्तं सुरासुरनरादिकम् ।
महापद्मासना देवी महाजीवनकारिणी ॥ १९ ॥
प्रतिमां जीवितां कृत्वा अनया शोणितं क्षिपेत् ।
सर्वदुष्टनिवाराश्च ध्यायेद्देवीं सुलोचनाम् ॥ २० ॥

[ प्रेतासने जपफलम् ]

[4]प्रेतासने जपेद् यस्तु सर्वकामफलं लभेत् ।
क्षितौ च ख्यातिविख्यातोऽसाध्यं साधयेत् पराम् ॥२१॥

[ महाध्यानकथनम् ]

महाध्यानं प्रवक्ष्यामि [5]परां शक्तिस्वरूपिणीम् ।
नीलपद्मासनां देवीं नीलपद्मसमप्रभाम् ॥ २२ ॥
चतुर्भुजां त्रिनयनां रक्तमाल्यविभूषिताम् ।
वामे खड्गश्च शूलश्च वज्रमङ्कुशदक्षिणे ॥ २३ ॥

1. 'श्रवणं पठेत्' A. 2. 'विद्या' C. 3. '-काली' C. 4. 'प्रेतशिले' C.
5. 'परमां शक्तिरूपिणीम्' A-C.

चन्द्रमण्डलमूर्द्धानं सूर्यमण्डलसंस्थिताम् ।
रक्तवस्त्रपरीधानां रक्तगन्धानुलेपनाम् ॥ २४ ॥
ब्रह्मविष्णुशिवादीनां शिरसा पादसेविताम् ।
उन्मत्तयौवनोपेतां प्रेतस्थां लिङ्गपीडिताम् ॥ २५ ॥
एवंरूपां महादेवीं चिन्तयेत् साधकोत्तमः ॥ २६ ॥

[ परमेश्वरीपूजानन्तरं चक्रे पूजनम् ]

अनया विद्यया मन्त्री संपूज्य परमेश्वरीम् ।
तदा चक्रे पदं [1]कृत्वा प्रतिमां चण्डिकां यजेत् ॥२७॥
संहारमुद्रया देवीं साधकः स्थिरमानसः ।

[ ततो बलिदानम् ]

बलिदानं ततः कुर्याद् यथाशक्त्या विधानतः ।
आनन्दरूपवान् भूत्वा सुन्दरीपुत्रवत् क्षितौ ॥ २८ ॥
कालीं कामातुरां भीमां प्रचण्डगणवेष्टिताम् ।
कालखड्गधरां देवीं रुधिरौघश्च भक्षिताम् ॥ २९ ॥
दुर्लभां परमां देवीं महात्रिपुरसुन्दरीम् ।

[ आकर्षणबीजकथनम् ]

कथयामि परं [2]बीजमाकर्षणकरं परम् ॥ ३० ॥
विष्णोः पदं वह्नि[3]बीजं चतुर्थस्वरभूषितम् ।
नादबिन्दुकलातीतं शक्तिं विसर्गसंयुताम् ॥ ३१ ॥
अमुकीं(?) [4]जीवमा[5]कर्ष द्विठान्तं साधकः पठेत् ।

[ त्रिकोणचक्रमध्ये देवकन्यादिलिखनम् ]

शिवरेफकयोर्मध्ये त्रिकोणचक्रमध्यगे ॥ ३२ ॥

---

1. 'दृष्ट्वा' A-C. 2. 'जीव-' C. 3. '-युक्तं' C. 4. 'बीजमाकर्ष' A.
5. '-कर्षय द्वि-' C.

शिशुरूपाकर्षकरीं देवकन्यां सुराङ्गनाम् ।
नागगन्धर्वकन्याश्च ऋषिकन्याश्च खेचरीम् ॥ ३३ ॥
[1]विलिख्य साधकः श्रीमानरुणा(ं) चिन्तयेत् सतीम् ।
हृदि मौलौ वराङ्गे च जवां दत्त्वा च कन्यकाम् ॥३४॥
[2]रक्तपुष्पं समादाय [3]कुङ्कुमं गन्धवासितम् ।
चक्रमध्ये शतं दत्त्वा कन्यानाम प्रपूजयेत् ।
समागच्छति सा नारी [4]मारबाणेन पीडिता ॥ ३५ ॥

[ चामुण्डाध्यानकथनम् ]

महात्रिपुरसुन्दर्या मूलविद्या यथोदिता ।
चामुण्डा भेदितानाम्नी ध्यानं वक्ष्यामि दुर्लभम् ॥३६॥
सूर्यकोटिनिभां बालां त्रिनेत्रामरुणाम्बराम् ।
धनुःपुस्तकबाणाख्यधरां बन्धूकसन्निभाम् ॥ ३७ ॥
चक्रलिङ्गे समाविष्टां काञ्चीयुक्तनितम्बिनीम् ।
स्तनभारो[5]न्नताकारां सिन्दूरपूरिताननाम् ॥ ३८ ॥
स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम् ।
मुक्ताहारसमायुक्तां त्रिबलीमध्यभूषिताम् ॥ ३९ ॥
सर्वशृङ्गारवेशाढ्यां कामा[6]वेशनकारिणीम् ।
नित्यानन्दादिभिर्देवीं पूजयेत् साधकोत्तमः ॥ ४० ॥

[ वक्तव्य-परमदुर्लभविद्या-प्रशंसा ]

एषा च [7]विद्या कथिता कथयामि सुदुर्लभाम् ।

---

1. विलोक्य A, 'विलिख्ये'त्यादिपादचतुष्टयं A-B-पुस्तकयो 'रक्तपुष्पे'त्यादिपाद-चतुष्टयात् परं दृश्यते । 2. 'वज्रं पुष्पं' C. 3. 'कुसुमं गन्धवेष्टितम्' । 4. 'मारणेन प्र-' A-B. 5. '-न्नतां कामां' C. 6. '-सेचन-' A-C. 7. 'कथिता विद्या' C.

या देवी जगति ख्याता महापर्वतवासिनी ।
परमानन्दहृदयः साधयेन्मोहनात्मिकाम् ॥ ४१ ॥

यस्यानन्दाज्जगद् व्याप्तं या देवी परमा कला ।
महामोहनदात्री च देवासुरनरादिषु ॥ ४२ ॥

[1]रज्यते सकलं नित्यं तदा देव्या चराचरम् ।
दुष्टवैरी भवेद्दास ईशः सर्वजनस्य च ॥ ४३ ॥

अथातः संप्रवक्ष्यामि विद्यां परमदुर्लभाम् ।
शिव[2]शक्तिसमायुक्तां [3]तुरीयस्वरभूषिताम् ॥ ४४ ॥

नादबिन्दुसमायुक्तां सर्वलोकमनोहरीम् ।
रेफहकारयोर्मध्ये त्रिकोणे चक्रमध्यगे ॥ ४५ ॥

सम्बोधनपदश्चैव साध्यं कर्मपदान्वितम् ।
पाशाङ्कुशपुटा शक्तिर्नादबिन्दुविभूषिता ॥ ४६ ॥

[ प्राणमन्त्रकथनम् ]

याद्याः सप्त [4]सकारान्ता व्योम[5]सर्गेन्दुसंयुता ।
तदन्ते हंसमन्त्रः स्यात्ततो'ऽमुष्य'पदं वदेत् ॥ ४७ ॥

'प्राणा' इति वदेत् पश्चा'दिह प्राणाः' पदं ततः ।
'अमुष्य जीव इह'तः 'स्थितोऽमुष्य'पदं वदेत् ॥ ४८ ॥

---

४७। याद्याः सप्तेति। तथाच—'यँ रँ लँ वँ शँ षँ सँ हँ सः, अमुष्य प्राणा इह प्राणाः, अमुष्य जीव इह स्थितः, अमुष्य सर्वेन्द्रियाणि, अमुष्य वाङ्मनश्चक्षुःश्रोत्र-घ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा' इति प्राणमन्त्रो भवति ।

---

1. 'वन्द्याभ' B-A. 2. 'वह्नि' C. 3. 'तुरीये'त्यादिपादद्वयी नास्ति A-B. 4. 'नकारान्ता' A. 5. '-मार्गेन्दु-' A., '-सार्धेन्दु-' C.

'सर्वेन्द्रियाण्यमुष्या'न्ते 'वाङ्मनश्चक्षु'रन्ततः ।
'श्रोत्रघ्राण'पदात् 'प्राणा इहागत्य '[1]सुखं चिरम् ।
तिष्ठन्तु' वह्निजायान्तः प्राणमन्त्रोऽयमीरितः ॥ ४९ ॥

[2]प्रत्यमुष्यपदस्यादौ पाशादीनि प्रयोजयेत् ।
अमुष्येतिपदस्थाने साध्यनाम समुच्चरेत् ॥ ५० ॥
प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः ।
साध्यं प्रतिष्ठितप्राणमाकर्षणा[3]दि योजयेत् ॥ ५१ ॥
एता विद्यागणाः सर्वाः पूजयेत् साधकोत्तमः ।
बृहच्छ्रीक्रमतन्त्रस्य मतमेतदुदीरितम् ॥ ५२ ॥

[ महायन्त्रधारणकथनम् ]

अथोच्यते महाय[4]न्त्रविशेषधारणं परम् ।
शुभेऽह्नि स्नानमाचर्य शुभे लग्ने शुभे क्षणे ॥ ५३ ॥
सिद्धियोगे महापर्वे पूजां कृत्वा [5]लिखेदिदम् ।

[ मन्त्रलिखनद्रव्योद्देशः ]

कुण्डगोलोद्भवं द्रव्यं स्वयम्भु कुसुमं तथा ॥ ५४ ॥
रोचना कुङ्कुमं क्षौद्रं कर्पूरं चन्दनं मदम् ।
एतद्द्रव्येण विलिखेच्चक्रराजं मनोहरम् ॥ ५५ ॥

[ लिखनप्रकारः ]

त्रिकोणान्तर्गतां मायां विलिखेत् साधकोत्तमः ।
रेफहकारयोर्मध्ये [6]देवानामाभिमुख्यदम् ॥ ५६ ॥

---

1. 'चिरं सुखम्' C 2. 'प्रत्यमुष्ये'त्यादिपादषट्कं नास्ति A-Bपुस्तकयोः ।
3. '-माकर्षमादि' A. 4. '-मन्त्र-' A. 5. 'पठेदिदम्' A. 6. 'देवीनामाभियुग्मकम्' A.

साध्यनाम द्वितीयान्तं तस्योर्द्ध्वं विलिखेन्मनुम् ।
तत्रैव मातृकां सर्वां विलिखेत् [1]क्रमवाह्यतः ॥ ५७ ॥

[ यन्त्रशोधनप्रकारः ]

पञ्चगव्यामृतेनैव मूलेन परिषेचयेत् ।
ततः प्रतिष्ठितप्राणां विद्यामष्टोत्तरं शतम् ॥ ५८ ॥
तत् स्पृष्ट्वा प्रजपेन्मन्त्री देवीध्यानपरायणः ।

[ धारणप्रकारः ]

हेम्नो मध्यगतं कृत्वा [2]रजतस्यापि वा पुनः ॥ ५९ ॥
करे [3]कृत्वा लभेद्दश्यं हृदये स्त्री [4]सुवल्लभे ।
कण्ठे धनं लभेद् भाले स्तम्भनं जृम्भणं भवेत् ।६०॥
शिखायां मोक्षमाप्नोति तस्माद् यत्नेन धारयेत् ।
धारणीयं प्रयत्नेन गोपनीयं पुनः पुनः ॥ ६१ ॥

[ मन्त्रदाने पात्रापात्रोल्लेखः ]

असत्याय न दातव्यं पुत्रशिष्याय [5]चैव हि ।
भक्तियुक्ताय शिष्याय सुपुत्राय प्र[6]काशयेत् ॥ ६२ ॥
पशुभ्यो बान्धवेभ्योऽपि न कदाचित् प्रकाशयेत् ।

[ अपात्रे मन्त्रदानफलम् ]

कृते तु अशुभं तस्य मन्त्रा यान्ति पराङ्मुखाः ॥६३॥
दुःखञ्च वर्द्धते नित्यं तस्माद् यत्नेन वर्जयेत् ।

[ गोरोचनादिना चक्रलिखनफलम् ]

गोरोचनादिभिर्मन्त्री चक्रराजं समालिखेत् ॥ ६४ ॥

---

1. 'चक्र-' C. 2. 'रजसारापि वा पुनः' ? A. 3. 'धृत्वा' C. 4. 'सुवल्लभः' C. 5. 'नैव हि' A. 6. '-दापयेत्' C.

अतीव सुन्दरीं रम्यां तन्मध्ये प्रतिमां वराम् ।
ज्वलन्तीं [1]सामसहितां कामराजविदर्भिताम् ॥ ६५ ॥

[ चिन्ताविशेषे फलविशेषः ]

चिन्तयेत् साध[2]केन्द्रोऽपि जनानाञ्च सहस्रशः ।
अदृष्टपूर्वा [3]युवती श्रु[4]तमाशु सुदुर्लभा ॥ ६६ ॥
राजकन्याऽथ चार्वङ्गी भयलज्जावि[5]वर्जिता ।
आयाति साधकं सम्यङ्मन्त्रमूढा सती ध्रुवम् ॥६७॥
चक्रमध्यगतो भूत्वा साधकश्चिन्तयेदथ ।
उद्यत्सूर्यसहस्राभमात्मानमरुणन्तथा ॥ ५८ ॥
साध्यमप्यरुणीभूतं चिन्तयेत् साधकोत्तमः ।
अनेन क्रमयोगेन स्वयं कन्दर्परूपवान् ॥ ६९ ॥
सर्वसौन्दर्यसुभगः सर्वलोकवशङ्करः ।
सर्वैः पूजोपहारैस्तु मुद्रासहितविग्रहः ॥ ७० ॥

[ चक्रे नामलिखने फलविशेषः ]

[6]चक्रं संपूजयेद् यस्तु यस्य नाम विदर्भितम् ।
स भवेद्दासवदाशु धनाढ्यो वाऽपि भूपतिः ॥ ७१ ॥
चक्रमध्यगतं कुर्यान्नाम यस्यान्तु [7]योजयेत् ।
अदृष्टामपि मन्त्रज्ञो योनिमुद्रासमन्वितः ॥ ७२ ॥
हठादानयते शीघ्रं यक्षिणीं राजकन्यकाम् ।
नागकन्यामप्सरसं खेचरीं वा सुराङ्गनाम् ॥ ७३ ॥

---

1. 'सामरहितां' A, 'नाम-' C. 2. '-कश्रेष्ठो योजनानां सह-' C. 3. 'यासारी' C. 4. 'श्रुतमात्रा सुदुर्लभा' A, '-तिमात्र-' C. 5. '-विभूषिता' A. 6. 'चक्र'मित्यादि पादषट्कं नास्ति C. 7. 'योजितम्' A.

विद्याधरीं दिव्यरूपामृषिकन्यां रिपुस्त्रियम् ।
मदनोद्भव[1]सन्तापस्फुरज्जघनमण्डलाम् ॥ ७४ ॥
कामबाणप्रभिन्नान्तःकरणां लोलच[2]क्षुषम् ।

[ चक्रे महाकलाध्यानफलम् ]

महा[3]कामकलाध्यानयोगादेव न संशयः ।
क्षोभयेत् स्वर्गभूर्लोकपातालतलयोषितः ॥ ७५ ॥

[ वशीकारितिलककथनम् ]

रोचनाभागमेकन्तु भागमेकन्तु कुङ्कुमम् ।
अथ भागद्वयं मन्त्री [4]चन्दनं मर्दयेत् समम् ॥ ७६ ॥
एकत्र तिलकं कुर्यात्त्रैलोक्यवशकारणम् ।
अष्टोत्तरशतावृ[5]त्त्या मन्त्रयित्वा वशं नयेत् ॥ ७७ ॥
राजानं नगरं ग्रामं येन यद् यत् प्रदृश्यते ।
मन्त्रिणा साधकेन्द्रेण तत् सर्वं तस्य वश्यगम् ॥७८॥

[ वशीकरणार्थं ताम्बूलाद्यभिमन्त्रणम् ]

ताम्बूलं धूपमुदकं पत्रं पुष्पं फलं दधि ।
दुग्धं घृतं दन्तपत्रं वस्त्रं [6]कर्पूरमेव च ॥ ७९ ॥
कस्तूरीं घुसृणश्चैलां लवङ्गं जातिपत्रकम् ।
शतमष्टोत्तरं जप्त्वा यस्मै कस्मै प्रयच्छति ॥ ८० ॥
स वश्यो जायते नूनं नात्र कार्या विचारणा ।
स्त्रियश्च सकला वश्या दासीभूता भवन्ति हि ॥ ८१ ॥
ह[7]ठाकर्षणमेतत्तु कथितं नान्यथा भवेत् ।

[ योषिदाकर्षणप्रकारः ]

रहस्यस्थानके मन्त्री लिखेद्रोचनया भुवि ॥ ८२ ॥

---

1. '-सन्तापां' C. 2. '-चक्षुषाम्' C. 3 '-काल' A. 4. 'कुङ्कुमं' A. 5. '-शतायुभ्यो' A. 6. 'ताम्बूल-' B. 7. 'हठादाकर्षणमेतत्' C.

चारुशृङ्गारवेशाढ्यां सर्वाभरणभूषिताम् ।
प्रतिमां सुन्दरीं प्रीतां विलिख्य सुमनोहराम् ॥ ८३ ॥
[1]तद्भालगलहृन्नाभिजन्ममण्डलयोजिताम् ।
जन्मनाममहाविद्यामङ्कुशान्तर्विदर्भिताम् ॥ ८४ ॥
सर्वसन्धिषु देहस्य मदनाक्षरमालिखेत् ।
स्फुरद्दाडिमपुष्पा[2]भं चिन्तयेद्देहसन्धिषु ॥ ८५ ॥
तदाशाभिमुखो भूत्वा स्वयं देवीस्वरूपधृक् ।
मुद्रा[3]न्तु क्षोभणीं [4]बद्ध्वा [5]मन्त्रमष्टशतं जपेत् ॥८६॥
नियोज्य दहनागारे चन्द्रसूर्यकलात्मके ।
ततो विकलचार्वङ्गीं मारबाणप्रपीडिताम् ॥ ८७ ॥
एवमाकर्षयेन्नारीं योजनानां शतादपि ॥ ८८ ॥

[ अवध्यत्वोपायकथनम् ]

मातृकां विलिखेच्चक्रे बाह्यतः सकलां बुधः ।
भूर्जपत्रे स्वर्णपत्रे [6]रौप्यपत्रेऽपि ताम्रजे ।
सोऽवध्यः सर्वजन्तूनां व्याघ्रादीनां विशेषतः ॥ ८९ ॥

[ राजवल्लभतोपायः ]

तथैव मारसंयुक्तां ससंज्ञां चक्रमण्डिताम् ।
कर्पूरकुङ्कुमाद्यैश्च राजवल्लभतां [7]व्रजेत् ॥ ९० ॥

[ वशीकरणप्रकारः ]

अनेन विधिना शुद्धो रोचनागुरुकुङ्कुमैः ।
विलिखेच्चक्र[8]राजेन साध्यनाम च मन्त्रवित् ॥ ९१ ॥

---

1. 'तत्तन्निगमहृन्नाभित तन्मण्डल-' A. 2. '-रुयां' A. 3. '-द्रान्तः' A. 4. 'मुक्ता' C. 5. 'ततो मन्त्रशतं' A. 6. 'रूप्य-' C. 7. 'लभेत्' C. 8. '-योगेन' C.

विदर्भितं स्वनाम्ना तु यस्मिन् कस्मिन्नुपस्थितम् ।
स्थावरं जङ्गमं वापि सकलं जनमण्डलम् ॥ ६२ ॥
[1]वशीकुर्यात् साधकेन्द्रो नूनमेव न संशयः ।

[ त्रैलोक्यवशीकरणोपायः ]

महात्रिपुरसुन्दर्याः कामकोटिकला स्मृताः ॥ ६३ ॥
एवमेवमवष्टभ्य साध्यनामाक्षराणि तु ।
[2]धनमप्यर्थने बाणैर्मातृकायाः प्रवेष्टये ॥ ६४ ॥
हेममध्यगतं कुर्याच्छिखायां वामके भुजे ।
धारयेद् यत्र कुत्रापि त्रैलोक्यवशकारणम् ।
राजेन्द्रवृन्दसकलं दासभूतं करोति च ॥ ६५ ॥
राजानो वाजिनः सर्पा महादुष्टा महोत्कटाः ।
व्याघ्राः केशरिणो मत्ता वश्यास्तस्य भवन्ति हि ॥६६॥

[ महाक्षोभकरणम् ]

पूर्वक्रमेण नगरनामसौन्दर्यमन्त्रवित् ।
मध्ये चतुष्पथे वापि चतुर्दिक्षु निधापयेत् ॥ ६७ ॥
महाक्षोभो योषिताञ्च जनानां महतामपि ।
तथैव सर्वजन्तूनां पुरस्थानञ्च जायते ॥ ६८ ॥

[ कामतुल्यत्वप्राप्त्युपायः ]

एतन्मध्यगतां पृथ्वीं सशैलवनकाननाम् ।
ज्वलन्तीं सर्वराजेन्द्रमण्डितां सागराम्बराम् ॥ ६९ ॥
मासमेकं चिन्तयेयुः साक्षात्कामसमो भवेत् ।
दृष्ट्याऽऽकर्षयते मन्त्री त्रैलोक्यं सचराचरम् ॥१००॥

---

1. 'कला' A. 2. 'वहिरप्यालिखेद् वर्णैः' C.

[ दृष्टिमात्रेण विषादिनाशक्षमताप्राप्तिः ]

दृष्ट्या विषं नाशयते [1]तत्क्षणान्नात्र संशयः।
भूतप्रेतपिशाचांश्च ज्वरांश्चातुर्थिकादिकान् ॥ १०१ ॥
शूलगुल्मादिरोगांश्च दृष्ट्या नाशयते क्षणात्।

[ श्रीसमाकर्षणसामर्थ्यप्राप्तिः ]

एतत् सिन्दूरसुभगं रात्रौ [2]संपूजयेद् यदि ॥ १०२ ॥
योजनानां शतादेव सम्यगाकर्षयेच्छ्रियम्।

[ दिग्विदिक्स्थजनवशीकारः ]

यदा दिक्षु विदिक्ष्वेवं सम्यग् देवीं प्रपूजयेत् ॥१०३॥
तत्र दिक्षु स्थितान् लोकान् विदिक्षुस्थान् जनानपि।
वशमानयते शीघ्रं [3]सपुत्रपशुबान्धवान् ॥ १०४ ॥

[ त्रैलोक्यवशीकरणम् ]

भूर्जपत्रे समालिख्य रोचनाऽगुरुकुङ्कुमैः।
तन्मध्ये नगरं देशं मण्डलं [4]खण्डमेव वा ॥ १०५ ॥
नाम्ना विदर्भितं सम्यक् पूजयित्वा यथाविधि।
भूमिमध्यगतं कृत्वा [5]त्रैलोक्यं वशमानयेत् ॥ १०६ ॥

[ कण्ठादौ धारणे फलविशेषः ]

अथवा धारयेत् कण्ठे शिखायां बाहुमूलके।
यत्र कुत्र स्थितो मन्त्री क्षोभयेन्नगरं महत् ॥ १०७ ॥

[ अर्कक्षीरादिभिश्चक्रलिखनफलम् ]

अर्कक्षीरेण संयुक्तं धुस्तूरकरसं तथा।
रोचना कुङ्कुमश्चैव लाक्षाकस्तूरीरक्तकम् ॥ १०८ ॥

1. 'नात्र कार्या विचारणा' C. 2 'संपूजितं' C. 3. 'समुद्रपशु-' C. 4. 'मण्डलेन वा' A. 5. 'त्रैलोक्ये' C.

एभिर्लिखेच्चक्रमेतद् यस्य नाम्ना च साधकः ।
तस्य व्याघ्रभयव्याधिरिपुसर्गगजादिकम् ॥ १०९ ॥
चौरग्रहजनाविष्ट[1]डाकिनीशाकिनी[2]भवम् ।
भयं न विद्यते नूनं परमन्त्राभिचारकम् ॥ ११० ॥

[ नित्यं चक्रधारणफलम् ]

नित्यं [3]सन्धारयेन्मन्त्री कालमृत्युं विनाशयेत् ।
त्रिकोणमध्यगां देवीं त्रिकोणोभयमध्यगाम् ॥ १११ ॥
अधस्तान्नामसंयुक्तां रोचनाकुङ्कुमान्विताम् ।
निधापयेत् सप्तमाहे दासवत् किङ्करो भवेत् ॥ ११२ ॥

[ सर्ववादिस्तम्भनम् ]

[4]पीतद्रव्यैः समालिख्य पीतद्रव्यैः समर्चयेत् ।
पूर्वाशाभिमुखो भूत्वा स्तम्भयेत् सर्ववादिनः ॥११३॥
सहस्रवदनोऽप्येव मूको भवति तत्क्षणात् ।
नाम्ना यस्य स वाग्मी तु पाषाण इव जायते ॥११४॥

[ शत्रुमारणप्रकारः ]

चक्रं विलिख्य मन्त्रज्ञो महानीररसेन तु ।
नाम संयोज्य विधिवद् दक्षिणाभिमुखो बुधः ॥११५॥
[5]वह्नौ दग्ध्वा तु तच्चक्रं मारयेद् वैरिसङ्कुलम् ।

[ विद्वेषणकरणम् ]

महिषाश्वपुरीषाभ्यां रसमाकृष्य मन्त्रवित् ॥ ११६ ॥
[6]गोमूत्रेण च संलिख्य नाम सन्दर्भ्य पूर्ववत् ।
क्षिप्त्वा पलाशमध्यस्थं विद्वेषणकरं भवेत् ॥ ११७ ॥

---

1. '-शाकिनीडाकिनी-' C. 2. '-भयम्' A. 3. 'सन्त्रारये-' A. 4. 'पीठद्रव्यैः' C. 5. 'अग्नौ' C. 6. 'गवां मूत्रेण' C.

[ उच्चाटनकरणम् ]

कृत्वा रोचनया [1]द्रोणकाकपक्षस्य मध्यगम् ।
लम्बमानं तथाकाशे शत्रूच्चाटनकारकम् ॥ ११८ ॥

[ सर्ववशीकरणम् ]

महानीलीरोचनाभ्यां दुग्ध[2]क्षाररसादिभिः ।
विलिख्य धारयेन्मन्त्री सर्ववर्णान् वशं नयेत् ॥ ११९ ॥

[ प्रकारान्तरेण सर्ववशीकरणम् ]

अनेनैव विधानेन स्थापयेद् वारिमध्यगम् ।
तेनोदकेन सुस्नातः पीतं तत् सर्ववश्यकृत् ।
सौभाग्यं जायते तेन [3]पानीयेन न संशयः ॥ १२० ॥

[ क्षोभणप्रकारः ]

एतन्मध्यगतां पृथ्वीं नगरं वापि साधकः ।
सप्ताहात् क्षोभयेत् सर्वं ज्वालामालां विचिन्तयेत् ॥१२१॥

[ स्त्रीवशीकरणप्रकारः ]

दशदण्डगते रात्रौ सरावे दाहवर्जिते ।
सिन्दूरकुङ्कुमाभ्याञ्च चक्रराजं समालिखेत् ॥१२२॥
साध्यप्रतिकृतिं कन्यां तन्मध्ये विलिखेद् बुधः ।
तदूर्ध्वे मूलमन्त्रञ्च तद्बाह्ये मातृकां लिखेत् ॥ १२३ ॥
सावरणां स्वेष्टदेवीं तत्रैव परिपूजयेत् ।
अष्टोत्तरशतं कुन्दं मूलं साध्यसमन्वितम् ॥ १२४ ॥
प्रत्येकक्षेपणाच्चैव [4]हठात् कुण्डमिदं महत् ।
चलज्ज्वलेन्दुसदृशीं त्रिकोणामरुणारुणाम् ॥ १२५ ॥

---

1. 'नाम काकमध्यस्य' C. 2. '-लाक्षारसा-' C. 3. 'पानीये च' A.
4. 'हरात्' C.

प्रलयानलसङ्काशां साध्याया योनिमध्यतः ।
ध्यायन् सहस्रं [1]जप्त्वैव तामानयति निश्चितम् ॥१२६॥

[ स्त्रीवशीकरणे प्रकारान्तरम् ]

उपविश्य च शय्यायां निर्जने शून्यवेश्मनि ।
यस्य नाम्ना स्वयं भुङ्क्ते ताम्बूलं निशि वा दिवा ।
[2]अष्टोत्तरशतं जप्त्वा सायात्येव तदन्तिकम् ॥ १२७ ॥

[ प्रकारान्तरेण स्त्रीवशीकरणम् ]

अष्टोत्तरशतं जप्त्वा पानीयं [3]प्राशयेदथ ।
यस्याः प्राणैः कल्पयित्वा सायाति मदविह्वला ॥१२८॥

[ दासीकरणप्रकारः ]

चन्द्र-चन्दन-कस्तूरी-रक्तसिन्दूरमिश्रितम् ।
अष्टोत्तरशतं जप्त्वा तिलकं कारयेद् यदि ।
यं यं पश्यति तच्छीघ्रं स स दासो भवेद् ध्रुवम् ॥१२९॥

[ स्त्रीवशीकारे कल्पान्तरम् ]

मधुसर्पिः समुन्मिश्र्य सिताकल्पितपुत्तलीम् ।
साध्यप्राणैः कृतप्राणां जप्त्वा [4]अष्टोत्तरं शतम् ॥१३०॥
भानुवारं समासाद्य यः खादेत् सप्तरात्रकम् ।
[5]सा च याति विह्वलाङ्गी साधकस्यान्तिकं ध्रुवम् ॥१३१॥

[ सर्ववादिस्तम्भनम् ]

पूर्वाशाभिमुखो भूत्वा पीतद्रव्यैः समर्चयेत् ।
पीठस्थाने समालिख्य स्तम्भयेत् सर्ववादिनः ॥१३२॥

---

1. 'जप्त्वैतामानयन्ति विनिश्चितम्' C. 2. 'अष्टोत्तरे'तिपादद्वयी नास्ति A-B. 3. 'प्रपिबे-' C. 4. 'त्वष्टो-' C. 5. 'सा चायाति' A.

[ प्रकारान्तरेण सर्वलोकवशीकरणम् ]

उत्तराभिमुखो भूत्वा सिन्दूररजसा लिखेत् ।
संपूज्य विधिवद् विद्वान् सर्वलोकं वशं नयेत् ॥१३३॥

[ सर्वयोषिन्मनोहरणम् ]

पश्चिमाभिमुखो भूत्वा चन्दनेन समालिखेत् ।
संपूज्य विधिवद् विद्यां सर्वयोषिन्मनो हरेत् ॥ १३४ ॥

वल्लभो जायते मन्त्री दासीमिव वशं नयेत् ।

[ महाहानिकरणम् ]

यमाशाभिमुखो भूत्वा चक्रं कृष्णं समर्च्चयेत् ॥१३५॥
यस्य [1]नाम्नान्वितं तत्र महाहानिः प्रजायते ।

[ स्तम्भविद्वेषणादिप्रकारः ]

अग्नि-राक्षस-वायव्य-शम्भु-कोणेषु [2]योजितम् ॥१३६॥
पूर्ववत् साधकश्रेष्ठः क्रमेणैव नियोजितम् ।
स्तम्भविद्वेषणव्याधिशत्रूच्चाटनकं भवेत् ॥ १३७ ॥

[ सर्ववशीकरणम् ]

रोचनाभिर्लिखेच्चक्रं क्षीरमध्ये [3]क्षिपेद् बुधः ।
सर्ववश्य[4]करञ्चैव भवत्येव न संशयः ॥ १३८ ॥

[ शत्रोरुच्चाटनकरणम् ]

गोमूत्रमध्यगं सम्यक् शत्रोरुच्चाटनं भवेत् ।

[ विद्वेषणकरणम् ]

तैलस्थं चक्रराजन्तु विद्वेषणकरं भवेत् ॥ १३९ ॥

[ शत्रुनाशकरणम् ]

[5]ज्वलज्ज्वलनमध्यस्थं शत्रुनाशकरं भवेत् ।

---

1. 'नामाङ्कितं' C. 2. 'पूजितम्' C. 3. 'लिखेत् ततः' A. 4. 'वरञ्चैव' A.
5. 'ज्वलज्ज्वलने'त्यादिपादद्वयी नास्ति A-पुस्तके ।

[ खेचरत्वसिद्धिः ]

यदैकान्ते चतुर्मार्गे सिन्दूररजसा लिखेत् ॥ १४० ॥

सर्वबाह्य[1]त आरभ्य यावन्मध्यञ्च साधकः ।

अकारादिक्षकारान्तां मातृकां तत्र संलिखेत् ॥१४१॥

पूजयेद्रात्रिसमये कुलाचारक्रमेण तु ।

साधकः खेचरश्चैव जायते नात्र संशयः ॥ १४२ ॥

[ अजरामरत्वप्राप्तिः ]

गिरावेकतरौ तद्वदर्च्चयेत् कुलमार्गतः ।

अजरामरतां लब्ध्वा सुखी भवति [2]मान्त्रिकः ॥१४३॥

[ खड्गादि सर्वसिद्धिलाभः ]

श्मशाने पूजयेच्चक्रं महाभूतदिने बुधः ।

यथाविधिविधानेन साधकः स्थिरमानसः ॥ १४४ ॥

खड्गसिद्धिश्च वेतालसिद्धिश्च गुटिकाञ्जनम् ।

पादुकाञ्जन[3]सिद्धिश्च मनःसिद्धिश्च धातुजम् ॥१४५॥

महावीरणसिद्धिश्च यक्षिणीं चटकोद्भवाम् ।

सर्वं तल्लभते मन्त्री नात्र कार्य्या विचारणा ॥ १४६ ॥

[ सर्वपापनाशप्रकारः ]

शिवां संपूजयेद्देवीं सुगन्धिकुसुमैः सुधीः ।

महापातकयुक्तात्मा तत्क्षणात् पापहा भवेत् ॥१४७ ॥

शमीदूर्वाङ्कुराश्वत्थपल्लवैरथवाऽम्बुजैः ।

मासेन हन्ति कलुषं सप्तजन्मकृतं नरः ॥ १४८ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्री-तत्त्वचिन्तामणौ

त्रयोविंशतितमः प्रकाशः ॥ २३ ॥

---

1. '-तयारभ्य' A. 2. 'मान्त्रिकः' A. 3. '-सिद्धञ्च' C.

# चतुर्विंशतितमः प्रकाशः

———:०:———

[ देवतास्तवपाठनिर्णयः ]

अथोच्यते देवतायाः स्तवपाठविनिर्णयः ।

[ पाठस्यावश्यकता ]

न मानसं भवेत् स्तोत्रं वाचिकन्तु प्रशस्यते ॥ १ ॥

[ पाठनियमः ]

अन्ते च प्रणवं दद्यादित्यु[1]वाचादिपूर्वकम् ।
सर्वत्र पाठे विज्ञेयमन्यथा विफलं भवेत् ।
शुद्धेना[2]नन्यचित्तेन पठितव्यं प्रयत्नतः ॥ २ ॥

[ पुस्तकस्याधारस्थापननियमः ]

आधारे स्थापयित्वा तु पुस्तकं [3]प्रजपेत् सुधीः ।

[ हस्ते पुस्तकस्थापने दोषः ]

हस्तसंस्थापना[4]देव यस्मादल्पफलं भवेत् ॥ ३ ॥

[ पुस्तकलेखकनिर्णयः ]

न स्वयं लिखितं तच्च कृतिना लिखितं पठेत् ।
अब्राह्मणेन लिखितं तच्चापि विफलं भवेत् ॥ ४ ॥

[ कलौ साधारणमनुष्यादिकृतस्तवपाठनिषेधः ]

न च स्वयंकृतं स्तोत्रमन्येनापि कृतं न च ।
यस्मात् कलौ न प्रशस्तमृषिभिर्भाषितं पठेत् ॥ ५ ॥

[ ऋषिच्छन्दआदीनां पाठः कर्त्तव्यः ]

ऋषिच्छन्दादिकं न्यस्य पठेत् स्तोत्रं विचक्षणः ॥ ६ ॥

---

1. '-त्युपचारादि-' A. 2. '-नाचल-' C. 3. 'स्थापयेत्' C. 4. '-नादेव' C.

[ प्रथमं सहस्रनामपाठः ]

यस्य यस्य च देवस्य तस्य तस्य सहस्रकम् ।
पठित्वा प्रथमं मन्त्री तस्य स्तोत्रं ततः पठेत् ॥ ७ ॥
संहिताजपने [1]स्तोत्रं शुभं प्राप्य समापयेत् ।

[ अध्यायमध्ये पाठविरामो न कर्त्तव्यः ]

अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन ।
कृते विरामे मध्ये तु अध्यायादिं पुनर्जपेत् ॥ ८ ॥

[ बलिदानविधिकथनम् ]

अथातो बलिदानस्य वि[2]धानमत्र वक्ष्यते ।
चमरः कृष्णसारश्च मत्स्यो [3]मेषश्च शूकरः ॥ ९ ॥
माहिषो वानरः खड्गो बलिर्मेषादितो भवेत् ।
कृष्णच्छागद्वयं [4]दद्यात् पश्चाद्दद्यान्महाबलिम् ॥१०॥

[ छागलस्य षड्विधत्वकथनम् ]

श्वेतः कृष्णो लोहितश्च कपिलश्चित्रपाण्डरौ ।
षड्विधश्छागलः प्रोक्तो गृहस्थानां परो बलिः ॥११॥

[ बलीनामुत्तममध्यमाधमत्वकथनम् ]

उत्तमौ [5]श्वेतकृष्णौ च मध्यमौ चित्रपाण्डरौ ।
[6]लोहितः कपिलश्चैव कनिष्ठः परिकीर्त्तितः ॥ १२ ॥
त्रिमासात् परतश्चैव यावदेकन्तु वत्सरम् ।
कृष्णो वा श्वेततरुणः प्रशस्तो बलिरुच्यते ॥ १३ ॥
षण्मासात् परतश्चैव यावद् वर्षद्वयं भवेत् ।
उत्तमोऽसौ बलिः प्रोक्तस्तस्माद्धीनोऽधमः स्मृतः ॥१४॥

---

1. 'स्तोत्रे' C. 2. 'विधानोऽत्र प्रचक्ष-' C. 3. 'मेषोऽथ शू-' C. 4. 'कुर्यात्' C.
5. 'सित-' C. 6. 'षण्मासात् परतश्चैव' C.

[ त्याज्यबलिः ]

कृष्णवर्णो बलिर्यस्तु श्वेतपुच्छो यदा भवेत् ।
छागलं तादृशं विद्वान् दूरतः परिवर्जयेत् ॥ १५ ॥

एवं सिते कृष्णपुच्छे वर्जयेन्मतिमान् नरः ॥ १६ ॥

[1]आकृष्णवर्णो यश्छागः पृष्ठवंशे सितो यदि ।
प्रशस्तं तं विजानीयाद् विपरीतन्तु वर्जयेत् ॥ १७ ॥

[ खञ्जादीनां बलौ त्याज्यता ]

खञ्जं काणं तथा कुब्जं सच्छिद्रं व्याधिसंयुतम् ।
विषाणदन्तरहितं वर्जयेत्तु विचक्षणः ॥ १८ ॥

[ उत्तममहिषबलिः ]

पञ्चाब्दं माहिषं श्वेतं प्रशस्तं परिकीर्त्तितम् ।

[ अधममहिषबलिः ]

स एव [2]महिषः कृष्णः पाण्डरश्चाधमो बलिः ॥१६॥

[ बलिषु पक्षिणां प्रशस्तता ]

[3]पक्षिणस्तु प्रशस्ताः स्युः सर्वे वर्णाः सुशोभनाः ।
त्रिपक्षात् परतश्चैव हीने चापि विवर्जयेत् ॥ २० ॥

[ बलिविशेषेण देवतातृप्तिकालकथनम् ]

मनुष्यैः कोटिवर्षाणि तृप्तिं गच्छन्ति देवताः ।
[4]गण्डैर्वर्षसहस्राणि महिषैः शरदां शतम् ॥ २१ ॥
छगलैर्वत्सरादूर्द्ध्वं द्वादशाब्दं दशाब्दकम् ।
पूर्णसांवत्सरैरेव त्रिवर्षं कच्छपेन तु ॥ २२ ॥
वराहेण तु पञ्चाशत्तदर्द्धं चामरेण तु ।
अब्दैकं गोधिकाभिश्च षण्मासं गात्रशोणितम् ॥२३॥

---

1. 'कृष्णवर्णोऽथ छगलः' C. 2. 'मध्यमः' C. 3. 'दक्षिणस्तु'? A. 4. 'गण्डै'रित्यादि पादषट्कं नास्ति A-पुस्तके ।

पायसेनापि षण्मासं तृप्तिं गच्छन्ति देवताः ॥ २४ ॥

[ स्त्रीपशुबलिदाननिषेधः ]

[1]न दद्यात् स्त्रीपशोर्मांसं हव्यकव्ये विशेषतः ।

[ होमे मांसनिरूपणम् ]

[2]होमे बुक्काग्रजं मांसं सरोमश्चार्द्धरात्रके ॥ २५ ॥
सिंहविल्वाकृतिश्चैव[3] वस्तु च पूगमेव च ।
बुक्काग्रमांसमानं स्याल्लुलापस्य नरस्य च ॥ २६ ॥
[4]तथा प्रमाणमात्रं स्यादजस्य वदनस्य च ।
धातकीफलमानन्तु गोधिकाया इतीरितम् ॥ २७ ॥
एतदाममयस्यैव भर्जिते मानवर्जितम् ।
हीनेन्द्रियपशोर्मांसं दूरतः परिवर्जयेत् ॥ २८ ॥

[ मांसहोमे कालनियमः ]

दिवा न जुहुयान्मांसं सन्ध्यायां सावसानके ।
[5]ब्राह्मे च मुहूर्त्ते जुहुयादथवा [6]सन्धिपर्वसु ॥ २९ ॥
एकेन च सहस्रं स्याद् द्विगुणं चार्द्धरात्रके ।
ब्राह्मे च मुहूर्त्ते द्विगुणं सन्ध्यायाश्च चतुर्गुणम् ।
पर्वसन्धौ शतगुणं तिथिसन्धौ शतोत्तरम् ॥ ३० ॥
काम्ये [7]च जुहुयान्मांसं पुरश्चरणशेषकैः ।
योन्या[8]वटे शतगुणं स्थण्डिलेऽपि न चाचरेत् ॥३१॥

[ बल्युत्सर्गप्रकारः ]

अथ संप्रोक्षणं कृत्वा बलिं समुत्सृजेद् बुधः ।
स्वयं पूर्वमुखो भूत्वा बलिं कुर्यादुदङ्मुखम् ॥ ३२ ॥

---

1. 'न च दद्यात् पशो-' A. 2. 'होमो' C. 3. '-श्चैवा वयस्तु पूगमेव च' ? । 4. 'तथे'त्यादि पादद्वयं नास्ति C. 5. 'ब्राह्मेच' इत्यादि पादचतुष्कं नास्ति C. 6. 'पर्व-सन्धिषु' A. 7. 'न' C. 8. 'रात्रौ' C.

अथवैतद्व्यत्ययः स्यात् सिन्दूराद्यैरलङ्कृतम् ।
अर्घ्यपात्रोदकैः शुद्धैर्मूलेन प्रोक्षयेत्त्रिशः ॥ ३३ ॥

[ पशुस्नापनमन्त्रः ]

ॐ वाराही यमुना गङ्गा करतोया सरस्वती ।
कावेरी चन्द्रभागा च सिन्धुभैरवसागराः ।
अजस्नाने महेशानि सान्निध्यमिह कल्पय ॥ ३४ ॥
ॐ पशुपाशविनाशाय हेमकूटस्थिताय च ।
परापराय परमेष्ठिने हूँकाराय च मूर्त्तये ॥ ३५ ॥
ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतो[1] वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥ ३६ ॥
विल्वपत्रोदकैरेभिः प्रोक्षणं कारयेदपि ।
[2]त्रिशः संपूजयेत्तञ्च तत्रेष्टं गन्धचन्दनैः ॥ ३७ ॥
ततो [3]निरीक्ष्य तं मन्त्री पठेत् कर[4]पुटः स्वयम् ॥३८॥

[ बलिप्रणाममन्त्रः ]

छाग त्वं बलिरूपेण मम भाग्यादुपस्थितः ।
प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥ ३९ ॥
चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम् ।
चामुण्डाबलिरूपाय बले तुभ्यं नमोऽस्तु ते ॥४०॥
यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
अतस्त्वां घातयिष्यामि तस्माद् यज्ञे वधोऽवधः ॥४१॥

[ बलिमूर्ध्नि मन्त्रजपः ]

वाङ्मायाकमलाबीजैस्तन्मूर्द्ध्नि [5]त्रिर्मनून् जपेत् ॥४२॥

---

1. '-तस्पृत्वा' C. 2. 'त्रिशः' A. 3. 'निवीयुतं' A. 4. '-पुट-द्वयम्' A. 5. 'त्रिः प्रसून् क्षिपेत्' C.

ततो बलिं समुत्सृज्य काम्यं कृत्वा विशालधीः ।
आनीय खड्गं पुरतो गन्धादिभिः समर्च्चयेत् ॥ ४३ ॥

[ खड्गध्यानम् ]

कृष्णं पिनाकपाणिञ्च कालरात्रिस्वरूपिणम् ।
उग्रं रक्तास्यनयनं रक्त[1]गन्धानुलेपनम् ॥ ४४ ॥
रक्ताम्बरधरञ्चैव पाशहस्तं कुटुम्बिनम् ।
पिबमानञ्च रुधिरं भुञ्जानं क्रव्यसंहतिम् ॥ ४५ ॥

[ खड्गपूजामन्त्रः ]

इति [2]ध्यात्वा यजेत् तञ्च मन्त्रेणानेन याजकः ।
रसना त्वं चण्डिकायाः सुरलोकप्रसादक ॥ ४६ ॥
मायाद्वयं खड्गपदं कालि कालि पदन्ततः ।
वज्रेश्वरी ततो लौहदण्डायै ङेऽन्तां नमःपदम् ॥४७॥
कूर्च्चबीजं लिखेत् खड्गे सिन्दूरचन्दनादिना ।
देव्या बीजं लिखेत्तत्र पूजयित्वा नमश्चरेत् ॥ ४८ ॥
[2]इति ध्यात्वा साधकस्तु नमस्कारं समाचरेत् ॥ ४९ ॥

[ खड्गनमस्कारमन्त्रः ]

असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपाल नमोऽस्तु ते ॥ ५० ॥
ततः खड्गं गृहीत्वा तु देवतारसनाधिया ।
अभिमन्त्र्य च मूलेन वक्ष्यमाणेन च स्वयम् ॥ ५१ ॥

---

1. 'रक्तमाल्या-' C. 2. 'इति ध्यात्वे'त्यादि 'नमश्चरेदि'त्यन्तग्रन्थभागो नास्ति A-पुस्तके ।

विषं [1]मायाद्वयं कालियुगं विकटरूपतः ।
दंष्ट्रे स्फेँ स्फेँ ततो ब्रूयात् फेत्कारिणीति खादय ॥५२॥
द्वितयं छेदययुगं सर्वान् दुष्टांस्ततः [2]परम् ।
मारयद्वितयं पश्चादजं खड्गेन छिन्धियुक् ॥ ५३ ॥
कालि कालि [3]किचिद्वन्द्वं पिबयुग्रुधिरं पदम् ।
स्फ्रौँ स्फ्रौँ [4]किलियुगं कालियुग्ममित्यभिमन्त्रणे ।

[ बलिस्कन्धे खड्गनियोजनमन्त्रः ]

हूँ हूँ फडिति मन्त्रेण स्कन्धे खड्गं नियोजयेत् ॥५४॥

[ खड्गलक्षणकथनम् ]

अथ वक्ष्यामि खड्गानां लक्षणं तन्त्रवर्त्मना ।
येन संछेदनेनापि साधकः सिद्धिमालभेत् ॥ ५५ ॥

[ चन्द्रहासलक्षणकथनम् ]

सर्वेषामुत्तमः खड्गश्चन्द्रहासः सुखावहः ।
पञ्चाशदङ्गुलैः कार्यः किंवा तालत्रयेण तु ॥ ५६ ॥

[ खड्गम् करवीरफलाकारादिकथनम् ]

करवीर[5]फलाकारः किंवा पद्मदलाकृतिः ।
अथवा कुब्जखड्गेन [6]भेदयेत् खलु साधकः ॥ ५७ ॥

---

५२-५४ । विषमिति । तथाच—ॐ ह्रीँ ह्रीँ कालि कालि विकटरूपदंष्ट्रे स्फें स्फें फेत्कारिणि खादय खादय छेदय छेदय सर्वान् दुष्टान् मारय मारय अजं खड्गेन छिन्धि छिन्धि कालि कालि किचि किचि पिब पिब रुधिरं स्फ्रौँ स्फ्रौँ किलि किलि कालि कालि हूँ हूँ फट् इति मन्त्रेण बलेः स्कन्धे खड्गं स्थापयेत् इत्यर्थः ।

---

1. 'पापद्वयं' A. 2. 'पठेत्' C. 3. 'कालि चिकिद्वन्द्वं पश्चात्' A. 4. 'कालियुगं' A. 5. '-दलाकारः' C. 6. 'दण्डखड्गैर्न भेदयेत्' C.

[ बलिच्छेदने दात्रादीनां विधिः ]

महाबलीनां सर्वेषां दात्रमत्र प्रकीर्त्तितम् ।

[ छुरिकादिना छेदननिषेधः ]

कर्त्तृकया क्षुरेणापि छिन्द्याच्छुरिकया न च ॥ ५८ ॥

कुठारपरशुभ्यां [1]वा भेदयेन्न कदाचन ।

[ तीक्ष्णखड्गेन छेदनकथनम् ]

छेदयेत्तीक्ष्णखड्गेन अच्छिद्रेण [2]मुखेन च ॥ ५९ ॥

नाकाशे च्छेदयेत्तन्तु समे देशे शुचौ तथा ।

छेदयेदनिशं शस्तं बलिं पूर्वमुखं शुभम् ।

उदङ्मुखः स्वयं [3]नेत्रबीजेनैव तु साधकः ॥ ६० ॥

[ छागादिपशूनां पूर्वाभिमुखेन च्छेदनम् ]

छागलादिपशूनाञ्च विपरीतमुखेन तु ।

[ बलिच्छेदककथनम् ]

प्रहाराणाञ्चाधिकारी तेषामेवं विधीयते ॥ ६१ ॥

स्वयं वा भ्रातृपुत्रो वा भ्राता वा सुहृदेव वा ।

सपिण्डश्छेदयेद् वापि शुद्धान्तःकरणो यदि ॥ ६२ ॥

[ रिपुप्रभृत्यनुपयुक्तानां कथनम् ]

न [4]रिपुं नाङ्गहीनं वा न काणं नापि कुब्जकम् ।

न योजयेच्छत्रुपक्षं बलिच्छेदनकर्मणि ॥ ६३ ॥

---

६०। नाकाशे इति। शून्यस्थाने बलिं न च्छेदयेत्। नेत्रबीजेन 'वौषट्' इतिमन्त्रेण।

---

1. 'च' C. 2. 'शुभेन च' C. 3. 'नैव' A-B. 4. 'विप्रं' A.

[ दिग्विशेषे बलेर्मस्तकपतने फलविशेषः ]

यदि वायव्यदिग्भागे नैर्ऋते दक्षिणेऽपि वा ।
मस्तकं पतते चैव हानिमत्र विनिर्दिशेत् ॥ ६४ ॥
शेषेषु दिक्षु सर्वासु विदिक्षु च फलं शृणु ।
[1]पूर्वोत्तरविदिग्भागे पतते यदि मस्तकम् ।
सर्वसम्पत्करं विद्याद् राज्ञां राज्यं विनिर्दिशेत् ॥६५॥
[2]भ्रमित्वा दक्षिणेनापि यदा पतति वै शिरः ।
तदा सिद्धिश्च मासान्ते वामकर्णे विपद् भवेत् ॥६६॥
राज्ञामग्नौ तथा हानिर्गृहस्थानां शुभं [3]भवेत् ॥ ६७ ॥
ऐशान्यमध्ययोश्चैव पतते यदि मस्तकम् ।
तदा स्वल्पेन कालेन सर्वसिद्धिर्भवेद् [4]ध्रुवा ॥ ६८ ॥
छिन्नं शिरो निपतितं सहास्यं यदि दृश्यते ।
विभूतिं तस्य जानीयाद्राज्ञां राज्यं विनिर्दिशेत् ॥६९॥
एकवारे भवेत् सिद्धिर्द्विवारे हानिरुच्यते ।
गृहस्थानां विजानीयाद्राज्ञान्तु विपरीतकम् ॥ ७० ॥

[ बलिचक्षुषि अश्रुदर्शनफलम् ]

यदाश्रु दृश्यते नेत्रे तदा हानिं विनिर्दिशेत् ।

[ दन्तानां कटकटाशब्दश्रवणफलम् ]

यदा कटकटाशब्दो दन्तानां श्रूयते क्वचित् ।
तदा तु मरणं विद्याद्धानिं वा तत्र निर्दिशेत् ॥७१॥

---

६७। राज्ञामिति। अग्नौ पूर्वदक्षिणकोणे।

---

1. 'पूर्वं चोत्तरदिग्भागे' C. 2. 'भ्रमयित्वा' C. 3. 'चरेत्' A. 4. 'ध्रुवम्' C.

[ बलिशिरःस्थापनम् ]

दद्याद्राक्षसदिग्भागे मन्त्री बलिशिरः स्वयम् ।

[ रक्तपात्रस्थापनम् ]

तद्दक्षिणे रक्तपात्रं विपरीतं न संददेत् ॥ ७२ ॥
महाबलीनां वायव्ये प्रदद्यात् साधकोत्तमः ।
बलीनामरि[1]संज्ञानां शिरांसि पुरतो ददेत् ॥ ७३ ॥
देवस्य सम्मुखं कृत्वा च्छिन्नभागान् प्रकल्पयेत् ।
तदेव शस्तं जानीयान्मध्यमं विपरीतकम् ॥ ७४ ॥
कील[2]कान्ते न्यसेच्छीर्षं यथा कम्पो न जायते ।

[ बलिमस्तकोपरि दीपदानम् ]

शीर्षोपरि ज्वलद्दीपं प्रदद्याच्चन्दनोक्षितम् ॥ ७५ ॥
[3]घृतेन सार्वभौमः स्यात्तैले सिद्धिश्च विन्दति ।
सूत्रवर्त्तीन् प्रदद्याद् वा वस्त्रवर्त्या प्रदृश्यते ॥ ७६ ॥

[ वर्त्तिकाप्रमाणम् ]

अङ्गुष्ठस्य प्रमाणन्तु दीर्घे चैव षडङ्गुलम् ।
कार्पाससूत्रैर्वा दद्यादेकविंशतिसूत्रकैः ॥ ७७ ॥
सुगन्धगर्भैस्तत् कुर्यात् कर्पूरागुरुचन्दनैः ॥ ७८ ॥

[ ग्राहादीनां शिरसि दीपदाननिषेधः ]

ग्राहाणां कच्छपानाञ्च गोधायाश्च विशेषतः ।
मत्स्यानामपि पक्षिणां न दीपं दापयेच्छिरे ॥ ७९ ॥

[ दीपस्य दीर्घकालज्वलनफलम् ]

शीर्षोपरि ज्वलद्दीपो यावत्कालं प्रवर्त्तते ।
तावत्कालं वसेत् स्वर्गे तस्माद् यत्नेन दापयेत् ॥८०॥

---

1. '-मति-' C. 2. 'कीलस्यान्ते' C. 3. 'घृतेने'त्यादि एतत्प्रकाशसमाप्ति-पर्यन्तं नास्ति C.

लोमदाहोद्भवं गन्धं ध्यात्वा देवी प्रसीदति ।
तस्मिन् संवर्द्धयेद्देवीं तस्मात् पात्रं विवर्जयेत् ॥ ८१ ॥
निर्वाणे मृत्युमाप्नोति नीयमाने प्रदीपके ।
न क्षीरशोणितं दद्यान्न चाज्यश्च कदाचन ॥ ८२ ॥
शर्कराक्षतदूर्वादि प्रदद्यात्त्रिर्महा[1]शतम् ।
सैन्धवं शृङ्गवेरञ्च कदल्याः फलमेव च ॥ ८३ ॥
पातयेन्मधुराणाञ्च शृतमुद्दिश्य साधकः ।
[2]बलिः प्रदाने तूद्दिष्टो वाराहीसंहिताक्रमात् ॥ ८४ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्री-तत्वचिन्तामणौ
चतुर्विंशतितमः प्रकाशः ॥ २४ ॥

---

1. '-र्महाश्वतम्' ? C. 2. 'बलिप्रदाने तदिष्टा' A.

## पञ्चविंशतितमः प्रकाशः

——:०*०:——

[ श्रीमहात्रिपुरसुन्दरी-सहस्रनामस्तोत्रम् ]

अथ श्रीमन्महादेव्याः सहस्रं नाम कथ्यते ।
कैलासशिखरे रम्ये नानारत्नोपशोभिते ॥ १ ॥

कल्पपादपमध्यस्थे सिद्धगन्धर्वसेविते ।
मणिमण्डपमध्यस्थे नानापुष्पोपशोभिते ॥ २ ॥

तं कदाचित् समासीनं भगवन्तं जगद्गुरुम् ।
कपालखट्वाङ्गधरं चन्द्रार्द्धकृतशेखरम् ॥ ३ ॥

त्रिशूलडमरुकरं महावृषभवाहनम् ।
जटाजूटधरं देवं वासुकिकण्ठभूषणम् ॥ ४ ॥

विभूतिभूषणं देवं नीलकण्ठं त्रिलोचनम् ।
द्वीपिचर्मपरीधानं शुद्धस्फटिकसन्निभम् ॥ ५ ॥

सहस्रादित्यसङ्काशं गिरिजार्द्धाङ्गभूषणम् ।
प्रणम्य शिरसा नाथं कारणं विश्वरूपिणम् ।
कृताञ्जलिपुटो भूत्वा प्राह तं शिखिवाहनः ॥ ६ ॥

कार्त्तिकेय उवाच ।

देव देव महादेव सृष्टिस्थित्यन्तकारक ।
त्वं गतिः सर्वदेवानां त्वं गतिः सर्वदेहिनाम् ॥७॥

त्वं गतिः सर्वभूतानां दीनानाञ्च त्वमेव च ।
त्वमेव जगदाधारस्त्वमेव विश्वकारकः ॥ ८ ॥

त्वमेव पूज्यः सर्वेषां त्वदन्या नास्ति मे गतिः ।
किं गुह्यं परमं लोके किमेकं सर्वसिद्धिदम् ॥ ९ ॥
किमेकं परमं श्रेष्ठं किं भोगं स्वर्गमोक्षदम् ।
विना तीर्थेन तपसा विना वेद्यैर्विना मखैः ॥ १० ॥
विना लयेन ध्यानेन केन सिद्धिमवाप्नुयात् ।
कस्मादुत्पद्यते सृष्टिः कस्मिंश्च प्रलयो भवेत् ॥ ११ ॥
कस्मादुत्तीर्यते देव संसारार्णवसङ्कटात् ।
तदहं श्रोतुमिच्छामि कथयस्व महेश्वर ॥ १२ ॥

श्रीमहादेव उवाच ।

साधु साधु त्वया पृष्टं तत्त्वं पार्वती[1]नन्दन ।
इति गुह्यतमं पुत्र कथयिष्याम्यसंशयः ॥ १३ ॥
सत्त्वं रजस्तमश्चैव ब्रह्मविष्णुशिवादयः ।
ये चान्ये बहवो भूताः सर्वे प्रकृतिसम्भवाः ॥ १४ ॥
सैव देवी परा शक्तिर्महात्रिपुरसुन्दरी ।
सैव प्रसूयते [2]सर्वं सैव विश्वं प्रपाल्यते ॥ १५ ॥
सैव संहरते [3]विश्वं जगदेतच्चराचरम् ।
आधारः सर्वभूतानां सा वै रोगार्त्तिहारिणी ॥ १६ ॥
इच्छा क्रिया तथा ज्ञाना ब्रह्मविष्णुशिवात्मिका ।
त्रिधा शक्तिस्वरूपेण सृष्टिस्थितिविनाशिनी ॥ १७ ॥
[4]सृज्यते ब्रह्मरूपेण विष्णुरूपेण पाल्यते ।
संहरेद्रुद्ररूपेण जगतीं सचराचराम् ॥ १८ ॥

1. '-पार्वतिनन्दन' A. 2. 'विश्वं' A. 3. 'सर्वं' A. 4. 'सृज्यते' इत्यादि विनाशिनी-( २६ ॥ )त्यन्तं नास्ति B-C-पुस्तकयोः ।

यस्या योनौ जगत् सर्वमद्यापि वर्त्ततेऽखिलम् ।
यस्यां प्रलीयते चान्त्ये यस्याञ्च जायते पुनः ॥ १९ ॥
यां समाराध्य त्रैलोक्ये संप्राप्तं पदमुत्तमम् ।
तस्या नामसहस्रं ते कथयामि शृणुष्व तत् ॥ २० ॥

ॐ अस्या श्रीमहात्रिपुरसुन्दर्याः सहस्रनामस्तोत्रस्य दक्षिणामूर्त्तिर्भगवान् वामदेव ऋषिर्गायत्त्रीच्छन्दः प्रकटगुह्यतर-संप्रदायकुलकौलिकगर्भरहस्यातिरहस्यपरापररहस्याचिन्त्यप्रभाव-वती श्रीमहात्रिपुरसुन्दरी देवता आकाशबीजं माया शक्तिः कामबीजं कीलकं बुद्धिशक्तिरुदानबीजं सुषुम्णा नाडी सरस्वती-शक्तिसिद्ध्यर्थकाममोक्षार्थे विनियोगः ॥ २१ ॥

ह्रीँ कल्याणी कमला काली कराली कामरूपिणी ।
कामाख्या कामदा काम्या कमला कामचारिणी ॥२२॥
कालरात्रिर्महारात्रिः कौलिनी कौल्यरूपिणी ।
कुमारी करुणा कीर्त्तिः कल्माषनाशिनीति च ॥ २३ ॥
कात्यायनी कलाधारा कौमुदी कमलाप्रिया ।
कीर्त्तिदा मुक्तिदा मेधा नीतिज्ञा नीतिवत्सला ॥२४॥
माहेश्वरी महामाया महातेजा महेश्वरी ।
महालोला महाजिह्वा महादंष्ट्रा महाभुजा ॥ २५ ॥
महामोहान्धकारघ्नी महामोक्षप्रकाशिनी ।
महादारिद्र्यशमनी महाशत्रुविनाशिनी ॥ २६ ॥
महाशक्तिर्महाशूर[1]महिषासुरमर्दिनी ।
महामाया महावीर्या महापातकनाशिनी ॥ २७ ॥

1. '-सुर-' B-C.

महाकामा [1]महाकाल्या महापातकहारिणी ।
महामन्त्रा[2] मन्त्रमयी मणिपूरकवासिनी ॥ २८ ॥
मानसी मानदा मान्या मनश्चक्षुरगोचरा ।
गणनीता च गायत्री गणगन्धर्वसेविता ॥ २९ ॥
गिरिजा गिरिशा साध्वी गिरिस्था गिरिसम्भवा ।
चण्डेश्वरी चण्डरूपा प्रचण्डा चण्डमालिनी ॥३०॥
चर्च्चिता चर्च्चितकला चण्डिका चण्डरूपिणी ।
यज्ञेश्वरी यज्ञरूपा जपयज्ञपरायणा ॥ ३१ ॥
यज्ञमाता यज्ञभोक्त्री यज्ञेशी यज्ञसम्भवा ।
सिद्धा यज्ञप्रिया सिद्धिर्यज्ञाङ्गी [3]यज्ञबन्धिका ॥ ३२ ॥
यज्ञप्रिया यज्ञरूपा याज्ञी यज्ञकृतालया ।
जालन्धरा जगन्माता जातवेदा जगत्प्रिया ॥ ३३ ॥
जितेन्द्रिया जितक्रोधा जननी जन्मदायिनी ।
गङ्गा गोदावरी गौरी गोमती च शतद्रुका ॥ ३४ ॥
घर्घरा वेदगर्भा च देविकाकरसम्भवा ।
सिन्धुर्मन्दाकिनी विप्रा यमुना च सरस्वती ॥ ३५ ॥
चन्द्रभागा [4]विपाशा च गण्डकी विन्ध्यवासिनी ।
नर्मदा कद्रुकावेरी वेत्रवती च कौषिकी ॥ ३६ ॥
महेन्द्रतनया चैव अहल्या चम्पकावती ।
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ॥३७॥
द्वारावती च शिखिनी महाकिल्विषनाशिनी ।
पद्मिनी पद्महस्ता च पद्मकिञ्जल्कवासिनी ॥ ३८ ॥

1. 'महाकल्पा' A. 2. 'महामखा' A. 3. 'यक्ष-' A. 4. 'विपाखा-' B.

पद्मवक्त्रा च पद्माक्षी पद्मस्था पद्मसम्भवा ।
ह्रीँकारी कुण्डली रात्रिर्हृत्पद्मस्था सुलोचना ॥३९॥
ऐँकारी भूषणा लक्ष्मीः क्लीँकारी क्लेशनाशिनी ।
हरिप्रिया हरेर्माता हरिनेत्रकृता[1]श्रया ॥ ४० ॥
हरिवक्त्रोद्भवा शान्ता हरेर्वक्षःस्थलस्थिता ।
वैष्णवी विष्णुरूपा च विष्णुमायास्वरूपिणी ॥ ४१ ॥
विष्णुमाया विशालाक्षी विशालनयनोज्ज्वला ।
विश्वेश्वरी च विश्वात्मा विश्वेशी विश्वरूपिणी ॥४२॥
विश्वात्मिका विश्वविद्या विश्वपाशविदारिणी ।
विश्वासकारिणी विश्वा विधिशक्तिर्विचक्षणा ॥ ४३ ॥
शिवेश्वरी शिवाराध्या शिवनाथा शिवप्रिया ।
शिवमाता शिवाख्या च शिवदा शिवरूपिणी ॥ ४४ ॥
भवेश्वरी भवाराध्या भवानी भवनायिका ।
भवमाता भावगम्या भवकण्टकनाशिनी ॥ ४५ ॥
भवप्रिया भवानन्दा भवकण्टकहारिणी ।
गतिर्वरेण्या सावित्री ब्रह्माणी ब्रह्मरूपिणी ॥ ४६ ॥
ब्रह्मेशी ब्रह्मदा ब्राह्मी ब्रह्माणी ब्रह्मवादिनी ।
दुर्गस्था दुर्गरूपा च दुर्गा दुर्गार्त्तिनाशिनी ॥ ४७ ॥
सुगमा दुर्गमा दाता दया गौरी दुरापहा ।
दुरितघ्नी दुरध्यक्षा दूरदुष्कृतनाशिनी ॥ ४८ ॥
पञ्चम्या पञ्चमी पूर्णा पूर्णपीठनिवासिनी ।
सत्त्वस्था सत्त्वरूपा च कल्पस्था कल्परूपिणी ॥४९॥

---

1. '-लया' A. इतः परं पत्रमेकं नास्ति A-पुस्तके ।

नानारत्नविचित्राङ्गी नानाभरणभूषिता ।
विश्वाम्बिका विश्वमाता विश्वपाशविदारिणी ॥५०॥
विशालकारिणी विश्वा विश्वशक्तिर्विलक्षणा ।
जवाकुसुमसङ्काशा दाडिमीकुसुमारुणा ॥ ५१ ॥
चतुरङ्गी चतुर्बाहा चतुर्द्वारव्यहासिनी ।
सर्वेशी सर्वदा सर्वा सर्वज्ञा सर्वदायिनी ॥ ५२ ॥
विश्वेश्वरी च सर्वाद्या सर्वाणी सर्वमङ्गला ।
नलिनी नन्दिनी नन्दा आनन्दानन्दवर्त्तिनी ॥ ५३ ॥
व्यापिनी सर्वभूतेषु भवभारविनाशिनी ।
कुलीना कुलमध्यस्था कुलधर्मोपदेशिनी ॥ ५४ ॥
सर्वशृङ्गारवेशाढ्या पाशाङ्कुशकरोद्यता ।
सूर्या सूर्यसहस्राभा चन्द्रकोटिनिभानना ॥ ५५ ॥
गणेशकोटिलावण्या सिंहकोटिविमर्द्दिनी ।
दावाग्निकोटिज्वलिनी कद्रुकोटिस्वरूपिणी ॥ ५६ ॥
समुद्रकोटिगम्भीरा वायुकोटिमहाबला ।
आकाशकोटिविस्तारा यमकोटिभयङ्करा ॥ ५७ ॥
मेरुकोटिसमुच्छ्राया गरुत्कोटिसमृद्धिदा ।
निष्कलङ्का निराधारा निर्गुणा गुणवर्जिता ॥ ५८ ॥
विशिष्टा विश्वजननी विश्वाख्या विश्ववर्द्धिनी ।
चित्रा विचित्रा चित्राङ्गी हेतुगर्भा रणेश्वरी ॥ ५९ ॥
इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिः शुचिस्मिता ।
श्रुतिः श्रुतिमयी सत्या श्रुतिरूपा श्रुतिप्रिया[1] ॥ ६० ॥

---

1. एतदन्तं नास्ति A-पुस्तके ।

श्रुति[1]प्राज्ञा महातत्त्वा पञ्चतत्त्वोपरिस्थिता ।
पार्वती हिमवत्पुत्री पारस्था पाररूपिणी ॥ ६१ ॥
जयन्ती भद्रकाली च अहल्या कुलनायिका ।
भूतधात्री च भूतेशी भूतस्था भूतभाविनी ॥ ६२ ॥
महाकुलमयी शक्तिर्महाविभववर्द्धिनो ।
हंसाख्या हंसरूपा च हंसस्था हंसरूपिणी ॥ ६३ ॥
सोमसूर्याग्निमध्यस्था मूलाधारनिवासिनी ।
[2]द्वादशारसरोजस्था सूर्यमण्डलवासिनी ॥ ६४ ॥
द्विपत्रदलमध्यस्था ललाटतलवासिनी ।
डाकिनी राकिणी चैव लाकिनी काकिनी तथा ॥ ६५ ॥
शाकिनी हाकिनी चैव षट्चक्रविनिवासिनी ।
सृष्टिस्थितिविनाशा च सृष्टिस्थित्यन्तकारिणी ॥ ६६ ॥
श्रीकण्ठप्रिया श्रीकण्ठा नादाख्या बिन्दुमालिनी ।
चतुःषष्टिकलाधारा देहदण्ड[3]कलाश्रया ॥ ६७ ॥
माया काली द्युतिर्मेधा स्वधा पुष्टिर्महाधृतिः ।
हिङ्गुला मङ्गला सीता सुषुम्णामध्यगामिनी ॥ ६८ ॥
परा घोरा करालाक्षी विजया जयशालिनी ।
हृत्पद्मनिलया चैव भीमा भैरवनादिनी ॥ ६९ ॥
मेनकागर्भसम्भूता तप्तकाञ्चनसन्निभा ।
अन्तकूटबीजस्था च त्रिकूटवनवासिनी ॥ ७० ॥
वर्णाक्षी वर्णरहिता पञ्चाशद्वर्णरूपिणी ।
विद्याधरी लोकधात्री अमरा अप्सरःप्रिया ॥ ७१ ॥

1. -प्रज्ञा A. 2. 'द्वादशारे'त्यादि पादद्वयी नास्ति A. 3. -समाश्रया A.

दाक्षा प्रजावती धन्या धनधान्यसमृद्धिदा ।
ईशानी भुवनेशानी भुवना भुवनेश्वरी ॥ ७२ ॥
अनन्ताऽनन्तमहिमा जगत्सारा जगद्भवा ।
अचिन्त्यशक्तिचित्तात्मा चिन्ता चित्तस्वरूपिणी ॥७३॥
ज्ञानगम्या ज्ञानमूर्त्तिर्ज्ञानिनी ज्ञानशालिनी ।
असिता घोररूपा च सुधाधारा सुधावहा ॥ ७४ ॥
भास्करा भास्वती भीतिर्भास्व¹द्दृष्टानुतापिनी ।
अनुद्यमा क्षमानन्दा दुर्लभा भवनात्मिका ॥ ७५ ॥
विश्ववन्द्या विश्ववीरा विश्वघ्नी विश्वसंस्थिता ।
शीलस्था शीलरूपा च शीला शीलप्रदायिनी ॥ ७६ ॥
बोधिनी बोधकुशला बोधना बोधिनी सदा ।
विद्योतिनी विचित्रात्मा विद्युत्पाटलसन्निभा ७६ ॥
विश्वयोनिर्महायोनिः कर्मयोनिः प्रियंवदा ।
रोहिणी रोगशमनी महारोगापहारिणी ॥ ७७ ॥
वसुदा रुद्ररूपा च रौद्री रौद्रार्त्तिनाशिनी ।
प्रजा दाक्षायणी दक्षा दक्षयज्ञविनाशिनी ॥ ७८ ॥
यशश्विनी यशःपूर्णा यशोदागर्भसम्भवा ।
देवकी देवमाता च राधिका कृष्णवल्लभा ॥ ७९ ॥
अरुन्धती शचीन्द्राणी गान्धारी गन्धमालिनी ।
ध्यानातीता ध्यानगम्या ध्यानाख्या ध्यानधारिणी ॥८०॥
लम्बोदरी च लम्बोष्ठी जाम्बवत्या जलोदरी ।
महोदरी मुक्तकेशी मुक्तिकामार्थसिद्धिदा ॥ ८१ ॥

1. -द्दृष्टानुशापिनी A

तपस्विनी रागहना गुह्यरत्ननिरञ्जना ।
अशरीरा शरीरस्था संसारार्णवतारिणी ॥ ८२ ॥
अमृता निष्कला भद्रा सकला कृष्णपिङ्गला ।
चक्रेश्वरी चक्रहस्ता परचक्रविदारिणी ॥ ८३ ॥
पद्मरागप्रतीकाशा निर्मलाकाशसन्निभा ।
रसज्ञा रसमध्यस्था गन्धस्था गन्धरूपिणी ॥ ८४ ॥
परंब्रह्मस्वरूपा च परंब्रह्मस्वरूपिणी ।
शब्दब्रह्मस्वरूपा च शब्दाख्या शब्दवर्जिता ॥ ८५ ॥
ऋद्धिवृद्धिः परा सिद्धिः सत्कीर्त्तिर्दीप्तसंस्थिता ।
आपूज्या शाम्भवी शक्तिः सुन्दराङ्गी तत्त्वरूपिणी ॥८६॥
शाश्वती भूतमाता च महाभूताधिपप्रिया ।
श्रुतिप्राज्ञा धर्मसिद्धिर्दत्तकन्याऽपराजिता ॥ ८७ ॥
कामसन्दीपनी कामा सदा कामकुतूहला ।
भोगापचारकुशला [1]अमरा कमलानना ॥ ८८ ॥
भक्तानुकम्पिनी मैत्री शरणागतवत्सला ।
क्षोभणी मोहनी चैव स्तम्भनी जृम्भणी तथा ॥ ८९ ॥
रथिनी ध्वजिनी सेना सर्वमन्त्रमयी त्रयी ।
ज्ञानमुद्रा महामुद्रा जगन्मुद्रा महोत्सवा ॥ ९० ॥
सहस्रभुजा चिच्छक्तिः सहस्राक्षी [2]सनातनी ।
सिद्धलक्ष्मीर्महालक्ष्मी राजलक्ष्मीः सुलक्षणा ॥ ९१ ॥
यज्ञसारा तपःसारा धर्मसारा जनेश्वरी ।
विश्वोदरी विश्वपूज्या विश्वाख्या विश्वतोमुखी ॥ ९२ ॥

---

1. अमला A. 2. शतानना A.

विश्वास्या श्रवणा घ्राणा विश्वप्राणा पदात्मिका ।
तरुणादित्यसङ्काशा किरणानेकसङ्कुला ॥ ९३ ॥
जटाजूटधरा मुख्या शुष्कमांसातिभीषणा ।
द्वीपिचर्मपरीधाना चीरवल्कलधारिणी ॥ ९४ ॥
त्रिशूलडमरुकरा नरमालाविभूषणा ।
अत्युग्ररूपिणी चोग्रा कल्पान्तदहनोपमा ॥ ९५ ॥
त्रैलोक्यधारिणी साध्या सिद्धिः साधकवत्सला ।
सर्वविद्यामयी सारा [1]वैरिवर्गविनाशिनी ॥ ९६ ॥
सुभगा सुमुखी रम्या मुखरा सोमभूषणा ।
शुद्धस्फटिकसङ्काशा महावृषभवाहिनी ॥ ९७ ॥
महिषी महिषारूढा महिषासुरमर्दिनी ।
दमिनी दामिनी दान्ता दया दोग्ध्री दुरापगा ॥ ९८ ॥
अग्निजिह्वा महाघोरा घोरघोरतरानना ।
नारायणी नारसिंही नृसिंहहृदयस्थिता ॥ ९९ ॥
योगेश्वरी योगरूपा योगमाता च योगिनी ।
खेचरी भूचरी खेला निर्वाणपदसंश्रया ॥ १०० ॥
नागिनी नागकन्या च सुवना नागनायिका ।
विषज्वालावती तीक्ष्णा फणाशतविभूषणा ॥ १०१ ॥
भीमवक्त्रा महावक्त्रा वक्त्राणां कोटिधारिणी ।
महावक्त्रा च धर्माख्या धर्मादिसुखदायिनी ॥ १०२ ॥
कृष्णमूर्द्धा महामूर्द्धा घोरमूर्द्धा वरानना ।
सर्वेन्द्रिया सर्वसंस्था सर्वेन्द्रियमनोमयी ॥ १०३ ॥

1. वारिवर्ग- A.

सर्वसंग्रामजयदा सर्वप्रहरणोद्यता ।
सर्वपीडोपशमनी सर्वाभीष्टप्रदायिनी ॥ १०४ ॥

सर्वैश्वर्यसमुत्पत्तिः सर्वग्रहविनाशिनी ।
भीतिघ्नी भक्तिगम्या च भक्तापमृत्युनाशिनी ॥ १०५ ॥

मातङ्गी मत्तमातङ्गी मतङ्गकुलमण्डिता ।
गण्डमण्डितसङ्काशा गुञ्जाहारविभूषणा ॥ १०३ ॥

सङ्गीतरङ्गरचना वीणावाद्यकुतूहला ।
अमृतोदधिमध्यस्था प्रबालरसनोज्ज्वला ॥ १०७ ॥

मणिमण्डपमध्यस्था रत्नसिंहासनस्थिता ।
परमानन्दमुदिता ईषत्प्रहसिताननना ॥ १०८ ॥

कुमुदा ललिता लोला लाक्षालसितलोचना ।
दिग्वस्त्रा देवदूती च देवदेवाधिदेवता ॥ १०६ ॥

सिंहोपरिसमारूढ़ा महाचलनिवासिनी ।
अट्टहासिनी घोरा घोरदन्तविनाशिनी ॥ ११० ॥

अत्युग्रा रक्तवर्णा च नागकेयूरमण्डिता ।
मुक्ताहारलतोपेततुङ्गपीनपयोधरा ॥ १११ ॥

रक्तोत्पलदलाकारमदमूर्च्छितलोचना ।
समस्तदेवतामूर्त्तिरसुरक्षयकारिणी ॥ ११२ ॥

खड्गिनी शूलहस्ता च चक्रिणी चाक्षमालिनी ।
शङ्खिनी चापिनी वाणी वज्रिणी रक्तदन्तिका ॥ ११३ ॥

आनन्दोदधिमध्यस्था कटिसूत्रैरलङ्कृता ।
नानाभरणदीप्ताङ्गी नानामणिविभूषिता ॥ ११४ ॥

जगदानन्दसंभूतिचिन्तामणिगुणाकरा ।
त्रैलोक्यनमिता पूज्या चिन्मयानन्दरूपिणी ॥ ११५ ॥
त्रैलोक्यवर्द्धिनी देवी दुःखदुःस्वप्ननाशिनी ।
घोराग्निदाहशमनी बीजदैवादिमालिनी ॥ ११६ ॥
महापराधराशिघ्नी महाचौरभयापहा ।
रागादिरोगरहिता जरामरणवर्जिता ॥ ११७ ॥
चन्द्रमण्डलसङ्काशा पीयूषार्णवसम्भवा ।
सर्व्वदेवैः स्तुता देवी सर्वसिद्धैर्नमस्कृता ॥ ११८ ॥
अचिन्त्यशक्तिरूपा च मणिमन्त्रमहौषधी ।
स्वस्ति स्वस्तिमती बाला मलयाचलवासिनी ॥ ११९ ॥
धात्री विधात्री सम्भावा रतिज्ञा रतिदायिनी ।
रुद्राणी रुद्ररूपा च रौद्री रौद्रार्त्तिनाशिनी ॥ १२० ॥
सर्वज्ञा चैव धर्मज्ञा रसज्ञा दीनवत्सला
अनाहता त्रिनयना निर्भवा निर्वृतिः परा ॥ १२१ ॥
परा घोरा करालाक्षी सुमतिः प्रियभाषिणी ।
महाम्बिका मन्त्रमस्या [1]मन्त्रमाता सुपुत्रिणी ॥१२२॥
शुद्धानन्दा महाभद्रा निर्गता निर्गुणात्मिका ।
धरिणी धारिणी पृथ्वी धरा धात्री वसुन्धरा ॥ १२३ ॥
मेरुमन्दरमध्यस्था स्थिरा शङ्करवल्लभा ।
श्रीमती श्रीमतां श्रेष्ठा श्रीकरी श्रीविभाविनी ॥१२४॥
श्रीदात्री श्रीविधात्री च श्रीमती श्रीमतां गतिः ।
उमाशा शार्ङ्गिणी कृष्णा कुटिला कुटिलालका ॥१२५॥

1. यन्त्रमाता A.

त्रिलोचना त्रिलोकस्था [1]पुण्यस्था पुण्यकीर्त्तिदा ।
अमृता सत्यसङ्कल्पा प्रेत्या सा प्रस्थितोदनी ॥ १२६ ॥
परेशी परमाराधा परा विद्या परापरा ।
सुन्दराङ्गी सुवर्णाभा सुरासुरनमस्कृता ॥ १२७ ॥
रुद्राणी पुष्टिदा देवी मानदा मानसप्रिया ।
कृष्णाङ्गवाहिनी चैव कृष्णा कृष्णमहोदरा ॥ १२८ ॥
शाम्भवी शम्भुरूपा च शम्भुस्था शम्भुसम्भवा ।
बिम्बो(श्वो)दरी योगमुद्रा योगरूपा च योगिनी ॥१२९॥
योगमुद्रा योगनिद्रा योगिनीकोटिसेविता ।
कुटिला नन्दिकन्या च शृङ्गारपीठवासिनी ॥ १३० ॥
क्षेमङ्करी सर्वरूपा दिव्यरूपा दिवीश्वरा ।
धूम्र[2]वक्त्रा धूम्रकेशी धूम्रवक्तावधूसरा ॥ १३१ ॥
पिनाकी रुद्रवेताली महावेतालरूपिणी ।
भगिनी भागिनी दत्ता विष्णुविद्या अनाश्रिता ॥१३२॥
मन्थरा जठरा तीव्रा अग्निजिह्वा भयापहा ।
पशुघ्नी पशुरूपा च पशुहा पशुवाहिनी ॥ १३३ ॥
पिता सन्तोषिता धाता पशुपाशविनाशिनी ।
चन्द्रप्रभा चन्द्ररेखा चन्द्रकान्तिविभूषणा ॥ १३४ ॥
कुङ्कुमाङ्कितसर्वाङ्गी सुधाबुद्बुदलोचना ।
निष्ठुरा क्रूरहृदया अक्रूरामृतभाषिणी ॥ १३५ ॥
आकाशलिङ्गसम्भूता भुवनध्यानवाहिनी ।
[3]निरुपाक्षी सहस्राक्षी शताक्षी बहुलोचना ॥ १३६ ॥

---

1. पुण्यदा A. 2. -वर्त्ती A. 3. विरूपाक्षी A.

दण्डावतारिणी तारा तरुणीताररूपिणी ।
सुधाधारा च धर्मज्ञा धर्मशास्त्रोपदेशिनी ॥ १३७ ॥

भवेश्वरी भवाराध्या भगिनी भगनायिका ।
भगविद्या भगक्लिन्ना भगयोनिर्भगप्रदा ॥ १३८ ॥

भगेशी भगरूपा च भगगुह्या भगावहा ।
भगोदरा भगानन्दा भगाद्या भगमालिनी ॥ १३९ ॥

मालिनी माधवी साध्वी मधुरूपा महोत्कटा ।
चन्द्रिका चन्द्रिमा ज्योत्स्ना विश्वचक्षुस्तमोऽपहा ॥१४०॥

सुप्रसन्ना महादूती यमदूती भयङ्करी ।
उन्मादिनी महारूपा दिव्यरूपा सुरार्चिता ॥ १४१ ॥

त्रैलोक्यफलिनी नित्या नित्यानन्दमदोद्धता ।
मदिरानन्दकैवल्या मदिराक्षी मदालसा ॥ १४२ ॥

सिद्धेश्वरी सिद्धविद्या सिद्धाद्या सिद्धवन्दिता ।
सिद्धार्चिता सिद्धमाता सिद्धिः सर्वार्थसिद्धिदा ॥१४३॥

मायामयी गुणातीता परं ज्योतिःस्वरूपिणी ।
परेशी परगा पारा परा सिद्धिः परा गतिः ॥ १४४ ॥

विमला मोहिनी आद्या मधुपानपरायणा ।
वेदवेदाङ्गजननी सर्वशास्त्रविशारदा ॥ १४५ ॥

सर्वदेवमयी नित्या सर्वशास्त्रमयी तथा ।
सर्वयज्ञमयी देवी सर्वधर्ममयीश्वरी ॥ १४६ ॥

सर्वयज्ञा महायज्ञा सर्वमन्त्राधिकारिणी ।
सर्वसम्पत्त्यधिष्ठात्री सर्वविद्यावली तथा ॥ १४७ ॥

सर्वसंक्षोभणी देवी सर्वमङ्गलकारिणी ।
[1]त्रैलोक्याकर्षिणी देवी सर्वाह्लादनकारिणी ॥ १४८ ॥
सर्वसम्मोहिनी देवी सर्वस्तम्भनकारिणी ।
त्रैलोक्यजृम्भिणी देवी तथा सर्ववशङ्करी ॥ १४९ ॥
त्रैलोक्यरञ्जिनी देवी सर्वोन्मादस्वरूपिणी ।
सर्वार्थसाधनी देवी सर्वदुःखविमोचनी ॥ १५० ॥
सर्वमृत्युप्रशमनी सर्वदुःखविनाशिनी ।
सर्वाङ्गसुन्दरी माता सर्वसौभाग्यदायिनी ॥ १५१ ॥
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यफलप्रदा ।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ॥ १५२ ॥
[2]सर्वाधारस्वरूपा च सर्वपापविनाशिनी ।
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ॥ १५३ ॥
सर्वलक्ष्मीमयी नित्या सर्वेप्सितफलप्रदा ।
सर्वदुष्टप्रशमनी परमानन्ददायिनी ॥ १५४ ॥
त्रैलोक्यनिलया त्रिस्था त्रिमाता त्रितलस्थिता ।
त्रिविद्या च त्रयी माया त्रैलोक्या त्रिपुरान्तरा ॥१५५॥
त्रियादवस्था त्रिविधा त्रिपुरा त्रिपुरास्थिता ।
त्रिधाम्नी त्रिदशाध्यक्षा त्रिघ्नी त्रिपुरवासिनी ॥ १५६ ॥
त्रिवर्गा त्रिगुदी त्रिस्था त्रिमूर्त्तिस्त्रिपुरेश्वरी ।
त्रि[3]विधा त्रिदिवेशानी त्रिभिस्त्रिपुरसुन्दरी ॥ १५७ ॥
त्रिपुरा श्रीस्त्रिजननी त्रिभुक् त्रिपुरभैरवी । ॐ ॥ १५८॥

---

1. 'त्रैलोक्याकर्षिणी'त्यादिपादद्वयी नास्ति A. 2. 'सर्वाधारे'त्यादिपादद्वयी नास्ति A. 3. -दिवा A.

इति श्रीपुरसुन्दर्या मन्त्रं नामसहस्रकम् ।
गुह्याद् गुह्यतरं पुत्र तव प्रीत्या प्रकीर्त्तितम् ॥ १५६ ॥
गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः ।
नातः परतरं स्तोत्रं नातः परतरं जपः ॥ १६० ॥
नातः परतरं पुण्यं नातः परतरा गतिः ।
स्तोत्रं नामसहस्राख्यं मम वक्त्रविनिर्गतम् ॥ १६१ ॥
यः पठेत् परया भक्त्या शृणुयाद् वा समाहितः ।
मोक्षार्थी लभते मोक्षं स्वर्गार्थी स्वर्गमाप्नुयात् ॥१६२॥
कामानवाप्नुयात् कामी धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां यशोऽर्थी लभते यशः ॥ १६३ ॥
कन्यार्थी लभते कन्यां सुतार्थी लभते सुतम् ।
गुर्विणी जनयेत् पुत्रं कन्या विन्दति सत्पतिम् ॥ १६४॥
मूर्खोऽपि लभते शास्त्रं चौरोऽभिलभते गतिम् ॥१६५॥
संक्रान्त्याञ्च चतुर्दश्यामष्टम्याञ्च विशेषतः ।
पौर्णमास्याममावास्यां नवम्यां भौमभार्गवे ॥ १६६ ॥
पठेद् वा पाठयेद् वापि शृणुयाद् वा समाहितः ।
गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः ॥ १६७ ॥
स मुक्तः सर्वपापेभ्यः कामेश्वरसमो भवेत् ।
लक्ष्मीवान् पुत्रवाञ् श्रीमान् वल्लभः सर्वयोषिताम् ॥१६८॥
तस्य वश्यं भवेदाशु त्रैलोक्यं सचराचरम् ।
रुद्रं दृष्ट्वा यथा देवा विष्णुं दृष्ट्वा यथामराः ॥ १६६ ॥
पन्नगा गरुडं दृष्ट्वा सिंहं दृष्ट्वा यथा गजाः ।
मण्डूका भोगिनं दृष्टा मार्जारं मूषिका यथा ॥ १७० ॥

शत्रवस्तु पालयन्ते तस्य वक्त्रावलोकनात् ।
अग्निचौरभयं तस्य दर्शनान्नैव सम्भवेत् ॥ १७१ ॥
पातका बहवः सन्ति मेरुमन्दरसन्निभाः ।
[1]भस्मसात् कुरुते [2]शीघ्रं तृणं वह्नि[3]हुतं यथा ॥ १७२ ॥
एकधा पठनादेव सर्वपाप[4]क्षयो भवेत् ।
[5]नश्यन्ति बहवो रोगा दशधावर्त्तनेन च ॥ १७३ ॥
श[6]तधावर्त्तनादेव वाचां सिद्धिमवाप्नुयात् ।
सह[7]स्रं पठते यस्तु खेचरो जायते नरः ॥ १७४ ॥
सहस्रदशकं यस्तु [8]पठेद् वै भक्तिमान् नरः ।
सा तस्य जगतां धात्री प्रत्यक्षा भवति ध्रुवम् ॥ १७५ ॥
[9]लक्षवारन्तु संपूर्णं स्तोत्रराजं पठेत् सुधीः ।
भव[10]पाशाद् विनिर्मुक्तो मम तुल्यो न संशयः ॥१७६॥
सर्वतीर्थेषु यत् पुण्यं सर्वयज्ञेषु यत् फलम् ।
सर्ववेदेषु [11]यद्धर्म्मः सर्वदानेषु यत् फलम् ॥ १७७ ॥
सर्वशास्त्रेषु प्रोक्तेषु यत् फलं परिकीर्त्तितम् ।
तत् [12]फलं कोटिगुणितं सकृत्[13]पाठाल्लभेन्नरः ॥१७८॥
[14]श्रुत्वा महातिबलवान् पुत्रवान् धनसम्पदः ॥ १७९ ॥
देहान्ते परमं स्थानं यत् सुरैरपि दुर्लभम् ।
स यास्यति न सन्देहः स्तवराजस्य कीर्त्तनात् ॥ १८० ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्री-तत्त्वचिन्तामणौ
पञ्चविंशतितमः प्रकाशः ॥ २५ ॥

---

1. भस्मानि A. 2. क्षिप्रं A. 3. -युतं A. 4. -पं प्रणश्यति A. 5. 'नश्यन्ती'त्यादिपादद्वयी नास्ति A. 6. दशधा पठनादेव वाचां सिद्धिः प्रजायते A. 7. -स्रधा जपेद् यस्तु A. 8. पठेद्वा भक्तिसंयुतः A. 9. लक्षपूर्णं पुत्र यदा A. 10. -प्राण- A. 11. 'यद्धर्म्म' इत्यादि 'सर्वशास्त्रेष्वि'त्यन्तभागो नास्ति A. 12. पुण्यं A. 13. जप्त्वा विधानतः A. 14. श्रुत्वा महाबलान् पुत्रदारांश्च सर्वसम्भवान् A.

# षड्विंशतितमः प्रकाशः

———:०*०:———

[ महायन्त्रसंस्कारकथनम् ]

अथोच्यते महा[1]यन्त्रसंस्कारः सर्वभूतिदः ॥ १ ॥
शुभेऽह्नि स्नानमाचर्य शुभे लग्ने शुभे क्षणे ।
कृतनित्यक्रियो मन्त्री प्राङ्मुखो वाप्युदङ्मुखः ॥ २ ॥
भूतशुद्ध्यादिकं कृत्वा कल्पोक्तन्यासमाचरेत् ।
ततः सङ्कल्प्य शुद्धात्मा शिवमन्त्रविशोधितम् ॥ ३ ॥
पञ्चगव्यं समानीय तत्र यन्त्रं समाहितः ।
सुवर्णादिमणौ क्लृप्तं क्षिपेत् प्रणवमुच्चरन् ॥ ४ ॥
तदुद्धृत्य सुवर्णादौ पात्रं संस्थाप्य मन्त्रवित् ।
पञ्चामृतेन तीर्थेन जलेन शीतलेन च ॥ ५ ॥
सहस्रशीर्षमन्त्रेण मूलमन्त्रपुरःसरम् ।
सुस्नाप्य च विशुद्धेन जलमुत्तोल्य तैजसे ॥ ६ ॥
सिंहासनादावारोप्य कुङ्कुमाद्यैर्विलेपयेत् ।
पीठपूजां ततः कुर्यात् स्वकल्पोक्तविधानतः ॥ ७ ॥
कुशैः स्पृशन् मन्त्रराजं शतमष्टोत्तरं जपेत् ॥ ८ ॥

[ यन्त्र-गायत्री ]

प्रणवं 'मन्त्रराजाय विद्महे' पदमुद्धरेत् ।
'महामन्त्राय धी'रूपं लिखेत्ततो 'मही'ति च ॥ ९ ॥

---

1. -मन्त्र- A.

'तन्नो 'यन्त्रः प्रचो'रूपं 'दयादे'षा प्रकीर्त्तिता ।
इमां यन्त्रस्य गायत्रीं जप्त्वा देवत्वमालभेत् ॥ १० ॥

[ इष्टदेवतापूजनोपदेशः ]

यथेष्टदेवतां ध्यात्वा मुद्रयावाहयेत् क्रमात् ।
जीवन्यासं ततः कृत्वा पूजयेदिष्टदेवताम् ॥ ११ ॥
उपचारैः षोडशभिर्नानाविभवविस्तरैः ।
नृत्यगीतैश्च वाद्यैश्च पञ्चघोषपुरःसरम् ॥ १२ ॥
ततो जपेदिष्टमन्त्रमष्टोत्तरसहस्रकम् ।
ततः कल्पोक्तमासाद्य हविषा संस्कृतेऽनले ॥ १३ ॥
अष्टोत्तरशतं [2]हुत्वा गुरुं विभवपूर्वकम् ।
तोषयेत् स्वर्णरत्नाद्यैः प्रदद्याद्दक्षिणामपि ॥ १४ ॥

[ उपचारमुद्रोपदेशः ]

षोडशोपचारमुद्राया उच्यन्ते लक्षणान्यथ ।
प्रसारयेदुभौ हस्तौ हृद्देशे विनियोजयेत् ॥ १५ ॥
अङ्गुल्यो विस्तृताः कार्या मध्येऽङ्गुष्ठौ तु विन्यसेत् ।
देवतासनवि[3]न्यासपञ्चमुद्रां प्रदर्शयेत् ॥ १६ ॥
ईषन्नम्राङ्गुलिर्ज्ञेया संवृताङ्गुष्ठकन्दरम् ।
नम्रे कनिष्ठतर्जन्यौ करयोरग्रसङ्गते ॥ १७ ॥
मध्यमानामिका कुर्यादियमासनमुद्रिका ।
ईषन्नम्राङ्गुलिर्दक्षा [4]संवेष्टयाङ्गुष्ठकं परम् ॥ १८ ॥
स्वागते स्वस्तिका [5]मुद्रा मध्यमूलगताङ्गुली ।
उपचारे स्वागते तु प्रयोक्तव्या विपश्चिता ॥ १९ ॥

---

1. मन्त्रः A. 2. कृत्वा C. 3. -न्यासे पञ्चमुद्रां C. 4. संयोज्याङ्गुष्ठकं C.
5. रुद्रा A.

तौ च प्रसारितौ हस्तौ [1]पाद्यमुद्रा प्रकीर्त्तिता ।
संयुक्तानामिकाङ्गुष्ठौ तिस्रोऽन्याः संप्रसारिताः ॥ २० ॥

मधुपर्कस्य [2]सा मुद्रा गदिता तन्त्रवेदिभिः ।
मु[3]ष्टियुक्तं [4]तथा नेत्रमङ्गुष्ठाग्रमधोमुखम् ॥ २१ ॥

मध्यमाङ्गुष्ठकौ लग्नौ तिस्रोऽन्याः सुप्रसारिताः ।
वस्त्रमुद्रा समाख्याता वस्त्र[5]मुद्राप्रवर्द्धिनी ॥ २२ ॥

[6]कनिष्ठाङ्गुलिकौ लग्नौ तिस्रो मध्याः प्रसारिताः ।
यज्ञोपवीतमुद्रेयं कथिता मन्त्रपारगैः ॥ २३ ॥

[7]मधुपर्कं समुत्ताना मुद्रा लग्नाङ्गुली मता ।
युक्ताऽनामिकयाऽङ्गुष्ठा गन्धमुद्रेति कीर्त्तिता ॥ २४ ॥

उत्थिताऽधोमुखी मध्या बद्धाङ्गुष्ठा यदीतरा ।
पुष्पमुद्रा समाख्याता पुष्पदानविवर्द्धिनी ॥ २५ ॥

अङ्गुष्ठं तर्ज्जनीलग्नं तिस्रः सङ्कुचिताः पराः ।
मुद्रा धूपप्रदाने स्याद्देवानां तुष्टिकारिणी ॥ २६ ॥

उत्ताना पौष्पिकी मुद्रा दीपमुद्रेति कथ्यते ।
पञ्चाङ्गुल्यग्रसंलग्नप्रोत्थिताऽधोमुखी यदि ॥ २७ ॥

त्रिधा निबद्धा मुद्रेयं नैवेद्यस्य प्रकीर्त्तिता ।
द्वौ करौ पृष्ठसंलग्नौ भ्रामयेद् ग्रथिताङ्गुली ।
स्फोटिकेति समाख्याता प्रणामे तां प्रदर्शयेत् ॥ २८ ॥

---

1. 'पाद्यमुद्रे'त्यादि 'संप्रसारिताः' इत्यन्तग्रन्थस्थले—'कृत्वा मधुपर्कस्य हस्तकौ' इति A. 2. मुद्रा सा A. 3. मुक्ति- A. 4. तथा स्नाने अङ्गु- C. 5. -दान- A-C. 6. 'कनिष्ठे'त्यादिपादद्वयं नास्ति C. 7. माधुपर्की C.

[ गन्धादिमुद्राणां प्रकारभेदः ]

अथवा दर्शयेन्मुद्रा इमा गन्धादिभिः क्रमात् ।
कनिष्ठाऽङ्गुष्ठसंसक्ता गन्धमुद्रा प्रकीर्त्तिता ॥ २९ ॥
[1]अङ्गुष्ठस्य च पृष्ठस्य युक्ता धूपस्य तर्ज्जनी ।
दीपस्य मध्यमानामा नैवेद्यस्य प्रकीर्त्तिता ॥ ३० ॥
इतराङ्गुलिसंयोगात् पञ्च मुद्राः प्रकीर्त्तिताः ॥ ३१ ॥
गन्धादिष्वपि दत्तेषु मुद्राश्चैताः प्रदर्शयेत् ।

[ मुद्रामाहात्म्यम् ]

मुद्रया यत् कृतं कर्म तदनन्तफलं भवेत् ॥ ३२ ॥

[ देवतायाः प्रतिष्ठाविधिः ]

अथ वक्ष्ये देवतायाः प्रतिष्ठा[2]नविधिक्रमम् ।
पुण्यक्षेत्रे पुण्यकाले शल्यादिरहिते स्थले ॥ ३३ ॥
मन्त्रकल्पा[3]वसाने च पूर्वेद्युरधिवासयेत् ।
सायं सङ्कल्प्य विधिवद् घटस्थापनपूर्वकम् ॥ ३४ ॥
गणेशादीन् समभ्यर्च्य दिक्पालान् परिपूजयेत् ।
यथाशक्त्युपचाराद्यैः पूजयेन्मूलदैवतम् ॥ ३५ ॥
सुगन्धितैलगन्धाद्यै[4]र्दिव्यान्तमधिवासयेत् ।
चन्द्रेणेत्यादिमन्त्रेण जयघोषपुरःसरम् ॥ ३६ ॥
इत्यधिवासनं कृत्वा संयतो विजितेन्द्रियः ।
प्रातर्निर्वर्त्त्य नित्यन्तु क्लृप्तयागस्थले विशेत् ॥ ३७ ॥
पताकाध्वजसंकीर्णे दिव्यमण्डपमण्डिते ।
वितानचामरच्छत्रपुष्पमाला[5]विभूषिते ॥ ३८ ॥

---

1. -ज्येष्ठाङ्गुष्ठस्य C. 2. -ष्ठायां विधिः क्रमात् A. 3. -नुसारेण A. 4. र्दिव्यैस्त- C. 5. विराजिते C.

मङ्गलाङ्कुरपात्राद्यैः सकलैः परि[1]पूरिते ।
मण्डलं सर्वतोभद्रं वेद्या उपरि संलिखेत् ॥ ३९ ॥
प्राङ्मुखो वाग्यतो भूत्वा सङ्कल्प्याभीष्टसिद्धये ।
पञ्चशुद्धिं समाचर्य [2]कुम्भमश्वत्थसंयुतम् ॥ ४० ॥
संस्थाप्य मण्डले तत्र यजेताधारशक्तिकाम् ।
पीठमन्त्रन्तिमास्तत्र स्थापयेत् सकलं बुधः ॥ ४१ ॥
दीक्षा[3]क्रमोक्तविधिनाऽभिषेककलसं तथा ।
पञ्चगव्यं ततः कृत्वा [4]शिवमन्त्रविशोधितम् ॥ ४२ ॥
तेन सुस्नापयेन्मन्त्री प्रतिमां प्रणवं जपन् ।
पञ्चामृतेन हविषा दध्ना च पयसा क्रमात् ॥ ४३ ॥
[5]तत उद्वर्त्तनं कृत्वा जलेन स्नापयेदपि ।
वाससा जलमुत्तोल्य दुकूले परिधापयेत् ॥ ४४ ॥
नयेत् स्थापितकुम्भस्य समीपे देवतां बुधः ।
ततो ध्यात्वा यथोक्तां तां मुद्रयावाहयेत् क्रमात् ॥४५॥
लेलिहामुद्रया हस्तं वि[6]न्यस्य देवताहृदि ।
प्राणप्रतिष्ठामन्त्रन्तु दशधा प्रजपेत्ततः ।
तत्तद्दैवतगायत्रीं शतमष्टोत्तरामपि ॥ ४६ ॥
ततः कल्पोक्तविधिना परिवारसमन्विताम् ।
पूजयेद्देवतां पश्चात् स्ववामे स्थान[7]मण्डपे ॥ ४७ ॥
अष्टपत्रसमायुक्ते पीठोपरि निधाय ताम् ।
[8]सुगन्धिदिव्यतैलेन दद्यादभ्यङ्गमेव हि ॥ ४८ ॥

1. -भूषिते A-C. 2. कूर्चनक्षत्र- C. 3. -कल्पोक्त- C. 4. शवमन्त्रविशोधनम् C. 5. तत्र उ- A-B. 6. विन्यसेद् C. 7. -मण्डले C. 8. '-सुगन्धी'त्यादि पादद्वयं नास्ति C.

मूलेन पावमानेन सहस्रशीर्षया बुधः ।
स्नापयेद् भक्तिभावेन अभिषेकघटामृतैः ॥ ४९ ॥
कर्पूरागुरुकस्तूरी प्रसूनचन्दनोदकैः ।
नानातीर्थोदकेनापि स्वर्णरत्नान्वितैर्जलैः ।
सर्वौषधिजलैर्गन्धजलैर्मूलेन सेचयेत् ॥ ५० ॥
ततः शुद्धदुकूलेन जलमुत्तोल्य साधकः ॥ ५१ ॥
परि[1]धाप्य दुकूले द्वे स्वर्णनिर्मितदोलया ।
मण्डले तां समानीय नृत्यैर्गीतै[2]र्जयस्वनैः ॥ ५२ ॥
षोडशैरुपचारैस्तु पूजयेत् कल्पमानतः ।

[ होमोपदेशः ]

कुण्डे वा स्थण्डिले मन्त्री हविषा संस्कृतेऽनले ॥५३॥
[3]अष्टोत्तरशतं हुत्वा श्रपयित्वा चरुं ततः ।
यथाविधिविधानेन स्रुचा होमं समाचरेत् ॥ ५४ ॥
ग्रासप्रमाणं चरुकं मूले[4]नाहुतिमन्त्रवित् ।
घृतस्रुवं तत्र दत्त्वा जुहुयादग्निसंमुखे ॥ ५५ ॥
पञ्चविंशतिवारं हि देवतोद्दिश्य यत्नतः ।
चरुणा दिक्पतिभ्यश्च दद्यात् पूर्वादितो बलिम् ॥५६॥
तत आवृतिदेवेभ्यो घृतेनाहुतिमाचरेत् ।
अथवा चरुणा तद्वत्ततो देवसमीपगे ॥ ५७ ॥
गत्वा पुष्पाञ्जलीन् पञ्च प्रदद्याच्छत्रचामरे ।
अष्टोत्तरशतं मन्त्रं जप्त्वा मूलं समाहितः ॥ ५८ ॥
अभिषिञ्चेत्ततो देवं पूजाकुम्भस्थपल्लवैः ।
मातृका मूलमन्त्रञ्च जपन् जयजयस्वनैः ॥ ५९ ॥

---

1. परिधाय C. 2. जयङ्करैः A. 3. शतमष्टोत्तरं C. 4. -नाहुत्य C.

गत्वा होमसमीपन्तु दद्यात् पूर्णाहुतिं ततः ।
दक्षिणां गुरवे दद्यात् [1]स्वर्णं कर्षप्रमाणतः ॥ ६० ॥
अर्द्धार्द्धांशं चतुर्थांशं यथाविभवपूर्वकम् ।
ततः सन्तोषयेद् [2]विद्वान् गृहीत्वा आशिषो द्विजान् ॥६१॥
इति देवप्रतिष्ठानमुक्तं सर्वसमृद्धिदम् ।

[ प्रतिष्ठाफलकीर्त्तनम् ]

यः करोति प्रतिष्ठानं दैवतस्य महात्मनः ॥ ६२ ॥
वसे[3]द्दिविसहस्राणि स्वर्गे देवप्रमाणतः ।
ततो लक्षसहस्राणि ब्रह्मलोके महीयते ॥ ६३ ॥
अथवा [4]कोटिकल्पान्तं मोहयेदच्युते पदे ॥ ६४ ॥

[ मठोत्सर्गविधिः ]

अथ वक्ष्ये गृहोत्सर्गं वास्तुयागपुरःसरम् ।
शरत्काले महापुण्ये पुण्यक्षेत्रे शुभेऽहनि ॥ ६५ ॥
दुर्गायै मन्दिरं [5]दत्त्वा स्व-स्व-मन्त्रानुसारतः ।
पूर्वोक्तं सर्वमाचर्य वृद्धिश्राद्धपुरःसरम् ॥ ६६ ॥
ततः सङ्कल्प्य विधिवन्मन्दिरे सुपरिष्कृते ।
पताकाध्वज[6]सङ्कीर्णे तु[7]ङ्गतोरणशोभिते ॥ ६७ ॥
छत्रचामरमालाद्यैर्वितानैरुपशोभिते ।
विलिख्य सर्वतोभद्रं स्थापयेत् कलसन्तथा ॥ ६८ ॥
पूजयेदिष्टदेवन्तु षोडशैरुपचारकैः ।
अङ्गदेवान् समभ्यर्च्य तत्तद्देवगणान् यजेत् ॥ ६९ ॥

---

1. सुवर्णं कर्षमानतः C. 2. विद्वान् A-B. 3. -दिवि सहस्राणि वर्षाणि देवमानतः C. 4. -कल्पकोटिकल्पान्तं मोदतेऽच्युते पदे (?) C. 5. दद्यात् A-B. 6. -समाकीर्णे C. 7. भृङ्ग- A.

वक्ष्यमाणेन मनुना शतमष्टोत्तरं हुनेत् ।
दशाक्षरेण दुर्गायै दद्यान्मन्दिरमुत्तमम् ॥ ७० ॥
भुवनेशीमहाबीजं [1]'दुर्गे'युगमुदाहृतम् ।
[2]'रक्षिणि'त्र्यक्षरं प्रोच्य वह्निजायावधि[3]र्मनुः ॥ ७१ ॥

[ मठदानफलम् ]

मन्त्रेणानेन यो दद्यान्मन्दिरं सुप्रतिष्ठितम् ।
सर्वैश्वर्यमवाप्नोति वसेत् कल्पायुतं दिवि ॥ ७२ ॥

[ साधनोपदेशः ]

इह [4]पीठवरे दिव्ये साधयेत् सिद्धिमुत्तमाम् ।
सप्तम्यां संयतो भूत्वा महाष्टम्यां यजेच्छिवाम् ॥ ७३ ॥
महास्नानं महापूजां दद्यात् सन्धौ बलिं ततः ।
प्रदीपं मस्तके [5]दत्त्वा तद्रक्तैः पूजयेच्छिवाम् ॥ ७४ ॥
कृत्वासनं छागदेहं [6]प्रजपेन्मनसा धिया ।
ताञ्च ध्यायन् विभीतश्चेत् साधको विजितेन्द्रियः ।
इह लोके भवेद्राजा परलोके शिवोपमः ॥ ७५ ॥

[ साधने फलविशेषोपदेशः ]

यः सदा भावयेद्देवीं [7]स्वात्मानं तन्मयं नरः ।
तस्य वश्यं जगत् सर्वं यक्षराक्षसमानुषम् ॥ ७६ ॥
भावेन तन्मयो भूत्वा यं यं पश्यति चक्षुषा ।
स स दासो भवेत् सार्द्धं सा सा याति कुलाङ्गना ॥७७॥

---

७१ । भुवनेशीति । एतेन "ह्रीं दुर्गे दुर्गे रक्षिणि स्वाहा" इति मन्त्रो भवति ।

---

1. दुर्गेषु समुदाहृतं A. 2. वायुपित्र्य- A. 3. -र्वपुः A. 4. पीठे नवे C. 5. दद्यात् C. 6. प्रपूजयेन्मनसा C. 7. आत्मानं C.

भावेन तन्मयो भूत्वा यं पश्यति रुषान्वितः ।
हृतश्रीर्जायते सद्यः सहसा दुःखितो भवेत् ॥ ७८ ॥
[1]भावेन तन्मयो भूत्वा प्रसन्नो यं प्रपश्यति ।
स मुक्तः सर्वपापेभ्यो दासवज्जायते ध्रुवम् ॥ ७९ ॥
भावेन तन्मयो भूत्वा यं यं भावयते मृतम् ।
आशु नश्यति निश्रीकः सभृत्यबलवाहनः ॥ ८० ॥
भावेन तन्मयो भूत्वा यं यं विद्वेष्टि साधकः ।
सर्वलोके स विद्विष्टो जायते नात्र संशयः ॥ ८१ ॥

[ होमप्रशंसा ]

एकतः सर्वकर्माणि एकतो जपभावना ।
सर्वाधिकं होमकर्म होमात् किं वा न सिध्यति ॥ ८२ ॥

[ होमाकरणनिन्दा ]

अनया दीक्षितो मन्त्री यदि होमविवर्ज्जितः ।
दुःखं प्राप्नोति मनसा कायेन च न संशयः ॥ ८३ ॥
अकुर्वतामग्निहोत्रमग्निर्भूत्वा महेश्वरी ।
धनानि शीघ्रं ग्रसति गृहक्षेत्रपशूनपि ॥ ८४ ॥
बहुदुःखेनार्ज्जितानि सञ्चितानि चिरेण यत् ।
आत्मप्राणाधिकान्याशु भूत्वाग्निर्ग्रसतीश्वरी ॥ ८५ ॥

[ अग्निहोत्रप्रशंसा ]

अग्निहोत्रं विना नैव सम्पदां भाजनं भवेत् ।
अग्निहोत्रपरस्येह चाग्निर्भवति शीतलः ॥ ८६ ॥
गृहक्षेत्रादिवित्तेषु प्रयुक्तोऽपि दहेन्न तत् ।
अग्नौ वसति देवेशी [2]तस्मादग्नौ [3]हुनेत् सदा ॥८७॥

---

1. 'भावेन तन्मय' इत्यादि पादचतुष्टयी नास्ति A. 2. तथा अग्नौ A-B. 3. वसेत् B-C.

गुरुमभ्यर्च्चयेन्नित्यं धनैस्त्रिभिः सुशोभनैः ॥ ८८ ॥
मिलित्वा साधकैः सर्वैर्नित्यं समयमाविशेत् ।
अदीक्षितान् द्विजांश्चापि त्यक्त्वा कर्म समाचरेत् ॥ ८९ ॥

[ चक्रप्रशंसा ]

चक्रे प्रवृत्ते तत्रस्थाः सर्वे वर्णा द्विजातयः ।
निवृत्ते [1]भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक् ॥ ९० ॥
देवीपुत्रेषु तिष्ठत्सु नैकः समयमाविशेत् ।
अशुभं जायते तस्य सिद्धिहानिश्च जायते ॥ ९१ ॥

[ वित्तशाठ्यनिषेधः ]

[2]वित्तशाठ्यं परित्यज्य सर्वकर्माणि साधयेत् ।
[3]वित्तशाठ्यं निहन्त्याशु पुत्रमायुर्यशो धनम् ॥ ९२ ॥

[ गुरुदेववञ्चननिषेधः ]

गुरुं देवं [4]वञ्चयित्वा यः कुर्याद्धनसञ्चयम् ।
[5]राजभिर्नीयते चैव तस्करैर्नीयतेऽथवा ॥ ९३ ॥
[6]अधितिष्ठन्ति यक्षाश्च वह्निर्दहति वा चिरात् ।
त्यक्त्वा निखातं म्रियते सत्यं तेन न भुज्यते ॥ ९४ ॥

[ वह्नौ होमस्य गुरवे दानस्य च प्रशंसा ]

हुतमेकगुणं वह्नौ दत्तमेकगुणं गुरौ ।
लभ्यते कोटिगुणितं विश्वसेन्न परामृशेत् ॥ ९५ ॥
यस्य नास्ति क्व विश्वासः कुरुते धनसञ्चयम् ।
राजभिर्नीयते चैव तस्करैर्नीयतेऽथवा ॥ ९६ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्री-तत्त्वचिन्तामणौ
षड्विंशतितमः प्रकाशः ॥ २६ ॥
श्रीतत्त्वचिन्तामणिः
**समाप्तः ॥**

---

1. तु पुनश्चक्रे C. 2. विभूषाढ्यं परि- A. 3. विभूषाढ्यं A. 4. रञ्जयित्वा C. 5. तेन तद् भुज्यते नैव ह्रियते राजतस्करैः A. 6. 'अधितिष्ठन्ती'त्यादि-पादचतुष्टयी ग्रन्थस्यान्तिमश्लोकरूपेण वर्त्तते A-पुस्तके ।

१३। कुमारसम्भवम्—मल्लिनाथकृतटीका--भरतमल्लिक-नारायण-नाथकृतटीकासारभूतटिप्पनी--वाच्यान्तरान्वय-बङ्गानुवादादिसमेतम्। अध्यापक-श्रीरामधनकाव्यतीर्थ-संस्कृतम्। अध्यापक-श्रीचिन्तामणिभट्टाचार्यकृत-हिन्दिभाषानुवाद-सहितम्। सप्तमसर्गपर्यन्तम्। मूल्यम्—१॥० सार्धरौप्यकम्।

१४। छन्दोमञ्जरी—टीका-बङ्गानुवाद-सूचीपत्रादिभिः समेता। अध्यापक-श्रीरामधनभट्टाचार्य-काव्यतीर्थ-संस्कृता। मूल्यम्—१) रौप्यकमात्रम्।

१५। सांख्यतत्त्वकौमुदी—वाचस्पतिमिश्र-कृता। सांख्यकारिकाव्याख्या-रूपा। टिप्पन्यादिसमेता। बङ्गीयविदुषा तर्कवागीश-रघुनाथचक्रवर्तिना कृतेन सांख्यतत्त्वविलासीयोपोद्घात-प्रकरणेन सहिता। संस्कृतभूमिका-सूचीपत्रादिभिः समलङ्कृता। हेमन्तकुमारीसंस्कृतकालेजाध्यक्ष-श्रीरमेशचन्द्र-तर्कतीर्थ-संस्कृता। मूल्यम्—१॥० सार्धरौप्यकम्।

१६। सामवेदसंहिता—सायणभाष्य-समेता। संस्कृतभाष्यसाराङ्गलानुवाद-टिप्पनीसमलङ्कृता। "बङ्गवासी"कालेजाध्यापक-श्रीभवविभूतिभट्टाचार्य-विद्याभूषण-एम्-ए-संस्कृता।
छन्दआर्चिक-पर्यन्तं प्रथमखण्डम्। मूल्यम्—१२) रौप्यकद्वादशकम्।
छन्द-आर्चिकपर्यन्तं मूलम्। मूल्यम्—॥० आनकाष्टकम्।

१७। गोभिलगृह्यसूत्रम्—भट्टनारायणकृतभाष्य-टिप्पनी-सूचीपत्रादिसमेतम्। अध्यापक-श्रीचिन्तामणि-भट्टाचार्य-संस्कृतम्। सम्पूर्णं प्रथमखण्डम्। मूल्यम्—१२) रौप्यकद्वादशकम्।

१८। न्यायदर्शनम्—वात्स्यायनभाष्य-वार्त्तिक--तात्पर्यटीका--विश्वनाथवृत्ति--टिप्पन्यादिसमेतम्। कलिकाता-संस्कृत-कालेजाध्यापक-श्रीतारानाथ-न्यायतर्कतीर्थेन रवीन्द्रनाथ-गीताञ्जल्यनुवादात्मक-संस्कृतगीताञ्जलि-कृदध्यापक-श्रीअमरेन्द्रमोहन-तर्कतीर्थेन च संस्कृतम्। तृतीयाध्याय-पर्यन्तं प्रथमखण्डम्। मूल्यम्—१०) रौप्यकदशकम्।

१९। श्रीतत्त्वचिन्तामणिः—पूर्णानन्दपरमहंसकृतः। टीका-टिप्पन्यादिसमेतः। अध्यापक-৺भुवनमोहन-सांख्यतीर्थेन अध्यापक-श्रीचिन्तामणिभट्टाचार्येण च संस्कृतः।
ऊनविंशप्रकाशपर्यन्तं प्रथमखण्डम्। मूल्यम्—११) रौप्यकैकादशकम्।
विंशादिषड्विंशान्तप्रकाशात्मकं सम्पूर्णं द्वितीयखण्डम्। मूल्यम्—२) रौप्यकद्वयम्।

२०। रघुवंशम्—मल्लिनाथकृतटीका-टिप्पनी-वाच्यान्तरान्वय-बङ्गानुवादादिसमेतम्। अध्यापक-श्रीहेमन्त-कुमारतर्कतीर्थ-संस्कृतम्। सम्पूर्णं प्रथमखण्डम्। मूल्यम्—३) रौप्यकत्रयम्।
द्वितीयखण्डम्—(१—९, ११—१४ सर्गाः)। अध्यापक-श्रीचिन्तामणि-भट्टाचार्य-कृत-हिन्दिभाषानुवादात्मकम्। मूल्यम्—॥० आनकाष्टकम्।

२१। चतुरङ्गदीपिका—आङ्गलभूमिकानुवाद-टिप्पनी-सूचीपत्रादिभिः समलङ्कृता। अध्यापक-श्रीमनोमोहनघोष-एम्-ए-काव्यतीर्थ-संस्कृता। मूल्यम्—३) रौप्यकत्रयम्।

## यन्त्रस्था ग्रन्थाः

२। वाल्मीकि-रामायणम्—सुन्दरकाण्डाद्यम्। अध्यापक-श्रीनरेन्द्रचन्द्रवेदान्ततीर्थ-एम्-ए-संस्क्रियमाणम्। खण्डशः प्रकाश्यमानम्। प्रतिखण्डं मूल्यम्—१) रौप्यकमात्रम्।

१६। सामवेदसंहिता—(उत्तरार्चिकम्, आङ्गलभूमिका-सूचीपत्रादिसहितम्।) अध्यापक-श्रीभव-विभूति-भट्टाचार्य-विद्याभूषण-एम्-ए-संस्कृता। मूल्यम्—१२) रौप्यकद्वादशकम्।

१७। गोभिलगृह्यसूत्रम्—सूचीपत्राद्यात्मकं द्वितीयखण्डम्। अध्यापक-श्रीचिन्तामणि भट्टाचार्य-सम्पादितम्। आसामसंस्कृत'एसोसियेशन'सभापति-सम्पादक-श्रीहट्टसंस्कृतकालेजाध्यक्ष-पाश्चात्त्यदर्शन-संस्कृतसाहित्या-ध्यापकचर-श्रीवनमालि-वेदान्ततीर्थ-एम् ए-लिखिताङ्गलभूमिकादिभिः समलङ्कृतम्। मूल्यम्—२) रौप्यकद्वयम्।

१८। न्यायदर्शनम्—चतुर्थ-पञ्चमाध्यायात्मकं द्वितीयखण्डम्। न्यायसूचीनिबन्ध-सूचीपत्रादिसहितम्। अध्यापक-श्रीनरेन्द्रचन्द्रवेदान्ततीर्थ-एम्-ए-लिखिताङ्गलभूमिकया समलङ्कृतम्। मूल्यम्—६) रौप्यकषट्कम्।

२२। न्यायपरिशिष्टम् (प्र)-बोधसिद्धिः)—उदयनाचार्य-कृतम्। वर्द्धमानोपाध्यायकृत-प्रकाशटीका-टिप्पन्यादिसमेतम्। आङ्गलभूमिका-सूचीपत्रादिभिः समलङ्कृतम्। अध्यापक-श्रीनरेन्द्रचन्द्रवेदान्ततीर्थ-एम्-ए-संस्कृतम्। मूल्यम्—५) रौप्यकपञ्चकम्।

२३। युक्तिदीपिका—(सांख्यसप्ततिविवरणम्)—आङ्गलभूमिका-सूचीपत्रादिभिः समलङ्कृता। अध्यापक-श्रीपुलिनविहारि-चक्रवर्त्ति-सांख्य-व्याकरणतीर्थ-एम्-ए-संस्कृता। मूल्यम्—५) रौप्यकपञ्चकम्।

